॥ ॐ ॥ श्रीगणेशायनमः ॥ अथवीरमित्रोदयाख्यधर्मशास्त्रंलिख्यते ॥ ० ॥ तत्रप्रथमंव्यवहाराख्यप्रकरणम् ॥ * ॥

॥ पुरतःप्रविलोक्यभर्गचापम्परतःकामपिकामकार्मुकश्रियम् । पुलकाञ्चितपीनबाहुदण्डःकुशलन्नःकुरुताद्रघुप्रकाण्डः ॥ १ ॥ स्वस्तिश्रीयुतवीरसिंहनृपतेराज्ञावशादुत्सुकःश्रीमित्राभिधपण्डितःप्रतिदिशङ्कीर्त्यानिशंमण्डितः । नानानिर्णयवर्णनंव्याव निनांसंख्यावताम्प्रीतिदंसम्प्राप्तव्यवहारसाधकमिमंकुर्वेप्रकाशम्परम् ॥ २ ॥ उद्धूतप्रभवप्रजापरिभवप्राग्भारभङ्गाद्भुतानन्ताकारमरागमत्सरबुधाराध्यन्निदिध्यासनैः । धर्मैकाश्रयमाश्रयंमुनिगिरामुद्दामसद्वारकम्प्रस्तौमिव्यवहारमच्युतमिवप्राज्यप्रस्तुतप्राक्तनैः ॥ ३ ॥ परिभाषापरिष्कारःप्रमाणानान्निरूपणम् । विवादपदनिर्देशःप्रकीर्णकविवेचनम् ॥ ४ ॥ एवम्प्रकरणान्यत्रचत्वारिप्रथमेपुनः । लक्षणंव्यवहारस्यनिरुक्तिर्मुनिभाषिता ॥ ५ ॥ व्यवहारस्यभेदाश्चस्वलक्षणविचक्षणाः । सामान्यतोविशेषाच्चपरिभाषाप्रकाशनम् ॥ ६ ॥ सामान्यपरिभाषायान्धर्माधिकरणेक्षणम् । दर्शनेव्यवहारस्यराज्ञोविधिविवेचनम् ॥ ७ ॥ प्राड्विवाकस्वरूपञ्चसभापतिसभासदाम् । निरूपणञ्चसभ्यानांसयुक्तिकबलाबलम् ॥ ८ ॥ केषाञ्चित्सभ्यभिन्नानामपिस्थानंसभास्थले । तत्प्रयोजनमादेयानादेयव्यवहारयोः ॥ ९ ॥ विवेचनमथोकार्य्येसद्दुष्टकसभापतेः । प्रतिष्ठानस्यहेतूनांपदानांसिद्धिशालिनाम् ॥ १० ॥ निरूपणमसद्दृष्टावदृष्टेचसभापतेः । सद्दुष्टकस्यदोषोक्तिःसभ्यकृद्दुष्टेफलाभिधा ॥ ११ ॥ विशेषपरिभाषायांप्रत्यभियोगनिर्णयः । निह्नवादौविधिस्तत्रनिह्नवादिविवेचनम् ॥ १२ ॥ विलंबोत्तरदानस्यक्वचिन्नैवविलम्बनम् । आद्येप्रकरणेत्वर्थाविविच्यन्तेक्रमादमी ॥ १३ ॥ उपोद्घातप्रसङ्गाद्यैरन्येपितदनुव्रताः । द्वितीयेकेतुसाक्ष्यादिलक्षणान्तत्रसाक्षिणः ॥ १४ ॥ असाक्षिणस्तत्रहेतुःसाक्षिप्रश्नविधिस्ततः । तद्द्वैधेनिर्णयःकौटसाक्ष्येक्वचिददोषता ॥ १५ ॥ निर्णयोलिखितस्याथतद्भेदास्तत्परीक्षणम् । साक्षिणांलिखितस्यापिशङ्कत्वेनप्रमाणता ॥ १६ ॥ भुक्तिर्विशेषणान्यस्याश्चार्थापत्त्यनुमानता । लौकिकानाम्प्रमाणानामभावेदिव्यभावना ॥ १७ ॥ दिव्यभेदास्तदावश्यादेशकालाधिकारिणः । त

न्यानुक्रमाद्दिशेव विधयो विविधाक्रमात् ॥ १८ ॥ तेषामपि च शङ्कोत्याऽनुमानत्वेन मानतः । एतेष्वेव विविच्यन्ते येतासां नीयकेन नःक्रमात् ॥ १९ ॥ व्यवहारपदान्यष्टादशोद्दिष्टानि लक्षणम् । तेषां सामान्यमथ तद्भिदानां विविधा विधा ॥ २० ॥ एतेषां सत्यग् च तत्तेनुरीयेतु प्रकीर्णकम् । यत्नोक्तमुपयुक्तं तद्विविच्य प्रतिपाद्यते ॥ २१ ॥ अथ कोऽयं व्यवहारः ॥ ० ॥ प्रमाणकर्तृकोपन्यस्तपक्षप्रतिपक्षपरिग्रह इति चेन्न । वादादेरपि तत्त्वापत्तेः । लिखितादिः प्रमाणविशेषः परिगृह्यत इति चेत् । तथापि तस्य मूल्यविरोधात् । अनुमानादावबहिर्भावाच्च तेषामव्यापकत्वात् । अत एवान्यविरोधेन स्वसंबन्धितया कथनमित्यपि परास्तम् । प्रमाणान्तर्भावेन स्वरूपनिरूपणानौचित्यात्मककथनादेर्व्यवहारपदवाच्यत्वे व्यवहारस्वरूपः पश्येदित्यादावनन्वयाच्च । उच्यते । ऋणादानादिलौकिकार्थविषयककथैव व्यवहारः । कथाव्यपदेशाभावस्तु शास्त्रीयपदार्थविषयत्वात् । अभिकरणादिव्यपदेशोऽयं यथावैदिकार्थविषयककथायां तत्र व्यवहारव्यपदेशः । अत एव यथायथं हेत्वाभासनिग्रहस्थानादियोजनमपि युक्तम् । तच्च तत्र तत्र प्रदर्शयिष्यते । चतुष्पात्त्वमपि तस्य तद्विशेष्येवेत्युपपादयिष्यते । यत्तु गोपालेन तत्त्वनिर्णयेच्छया वादस्तत्त्वमेवास्येति मिथ्यमतत्त्वेनोपन्यस्यजयभङ्गफलकत्वात् स्थापनावसानत्वाच्च जल्पमेवायमिति वर्णितं तदप्यसमयुक्तम् । पञ्चतत्त्वाभियोगभेदेन उभयरूपत्वस्यैव युक्तत्वात् । वैतण्डिकस्य व्यवहारायोग्यत्वादस्य वितण्डात्वम्परमसम्भवि । अन्यविरोधेन स्वसम्बन्धितया कथनमिति विज्ञानयोगिवचोऽप्येवं सतिनायुक्तम् । न च पश्येदित्यनन्वयः । निर्णयार्थकथनतया सर्वेनियमनमभिलप्याख्यानात् । स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः । आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥ इति याज्ञवल्क्यवचनं यद्यपि व्यवहारपदान्यृणादानादीनि सामान्येन लक्षयति तथापि व्यवहारसामान्यलक्षणमपि समानसंवित्संवेद्यतया ततः प्रतीयते । तस्मायमर्थः । स्मृत्याचारादिधर्मप्रमाणातिक्रान्तरीत्याऽन्यैरभिभूतः पूर्वोवासजादिभ्यो व्यवहारदर्शिभ्यो यद्यावेदयति तद्विनदावेदनमनन्तरं तत्प्रभृति व्यवहारस्य पदं विषयः । इतीति प्रसिद्धमृणादानादि लक्ष्यत्वेन मन्वाद्युक्तमुपधि

न्नमिति । एवञ्चार्थित्वमाधर्षकस्यप्रत्यर्थित्वन्तयोर्विवादस्सव्यवहारइतिप्रतीयते । इदमेवचमिताक्षरायामन्य
विरोधेनेत्यादिनानिष्कृष्टमुक्तम् । अन्यविरोधेनेत्यनुक्तेप्रश्नोत्तरादिरूपेणस्वसंबन्धिकथनमपिव्यवहारःस्यात् । स्वसम्बन्धि
तयेत्यनुक्तेएकसम्बन्धितयासाक्षिणाकथनमन्यविरोधिभवत्येवेत्यस्याप्यर्थित्वापत्तिरतःस्वसम्बन्धितयेति ॥ इदंचोत्तरचतुष्ट
येप्यनुगतं । नचसम्प्रतिपत्तावव्याप्तिःतत्रापिसाध्यतयावादिनानिर्द्दिष्टस्यसिद्धतयानिर्द्देशेतद्विरोधपर्य्यवसानात् । अन्य
थोत्तरत्वभङ्गप्रसंगात् । यत्रापिद्धावपिभाषावादिनौतत्रापिपरस्परविरोधावश्यभावान्नाव्याप्तिः । इदंचाग्रेव्यक्तिभविष्यति ।
यच्चकात्यायनेनोक्तं । प्रयत्नसाध्येविछिन्नेधर्माख्येन्यायविस्तरे । साध्यमूलस्तुयोवादोव्यवहारःसउच्यतइति । एतच्चव्यवहा
रहेतुव्यवहारस्वरूपोक्तिपरंतथामाधवीयपारिजातादिष्वेवंव्याख्यातम् । विहिताचरणनिषिद्धवर्जनादिप्रयत्नसाध्येधर्मा
ख्येवस्तुनिविछिन्नेविप्लुतेसतीतिव्यवहारहेतुरुक्तः ॥ धर्माधर्मविप्लवस्यैवव्यवहारहेतुत्वात् । तथाचनारदः ॥ मनुःप्रजा
पतिर्यस्मिन्कालेराज्यमबूभुजत् । धर्मैकतानाःपुरुषास्तदासन्सत्यवादिनः । तदानव्यवहारोभून्नद्वेषोनापिमत्सरः । नष्टे
धर्मेमनुष्येषुव्यवहारःप्रवर्त्ततइति । वृहस्पतिरपि । धर्मप्रधानाःपुरुषाःपूर्वमासन्नहिंसकाः । लोभद्वेषाभिभूतानांव्यवहारः
प्रवर्त्ततइति । न्यायेत्यादिनाव्यवहारस्वरूपमुक्तम् । तच्चमाधवीयव्याख्यानम् । न्यायःशिष्टसम्प्रतिपन्नंलौकिकमाचरणं
तस्यविस्तरइदंयुक्तमिदमयुक्तमिति । उपपत्तिपुरःसरोनिर्णयः । तस्मिन्विषयभूतेतत्प्रवर्त्तकोर्थिप्रत्यर्थिनोःसाध्यमूलसा
ध्यमृणादानादिपदंतन्मूलस्तद्विषयकोयोविवादस्सव्यवहारइति । मदनरत्नेतुन्यायःप्रमाणन्तस्यविस्तरःप्रवृत्तिर्यस्यत
॥ ८ ॥ स्मिन्विषयइति । साध्यमूलेत्यादितुल्यम् । मदनरत्नाकरस्मृतिचन्द्रिकाकल्पतरुकारैःसर्वमेवेदंवचनंव्यवहारस्वरूपप
॥ ९० ॥ रतयापिव्याख्यानमुक्तम् । प्रयत्नसाध्येकष्टसाध्येपराभिभवेनस्वेच्छयाभोक्तुमशक्येगृहक्षेत्रादौसतिन्यायःप्रमाणंविस्तार्यते
॥ ११० । १० ॥ प्रपंच्यतेयस्मिन्तस्मिन्धर्माधिकरणेसदसिसाध्यमूलेत्यादिपूर्ववत् । तेनापिप्रागुक्तमेवविवक्षितमतस्तत्रान्यपदकृत्येना

नीयपतितव्यं । वयन्तु सर्वे सप्तम्यन्तसामानाधिकरण्येन व्याचक्ष्महे । विहितानुष्ठानादिगोचरप्रयत्नसाध्ये धर्माख्ये न्यायवि-
स्तरे । नीयन्तेऽर्था अनेनेति न्यायः प्रमाणं श्रुतिस्मृत्यादि विस्तार्यन्ते प्रवर्त्यन्तेऽस्मिन् श्रुत्यादिप्रमेय इत्यर्थः । विच्छिन्ने विविधं छिन्ने प्रमा-
णापरिज्ञानतत्तात्पर्यानवधारणादिना दुर्ज्ञेये सति । यद्वा । धर्मश्चाख्यायतेऽनेनेति धर्माख्यो धर्मप्रतिपादक इति यावत् । न्या-
यविस्तरे प्रमाणसमूहे श्रुतिस्मृत्यादौ प्रमादादिना विच्छिन्ने लुप्तप्राये सति साध्यमूलेत्यादि गतार्थमिति । हारीतः । स्वधर्मस्य य-
था प्राप्तिः परधर्मस्य वर्जनम् । न्यायेन क्रियते तत्तु व्यवहारः स उच्यत इति । न्यायेन प्रमाणेन । एतस्यापि पूर्वोक्त एव तात्पर्यम्
॥ इति व्यवहारलक्षणम् ॥ * ॥ निरुक्तिमपि व्यवहारपदस्याऽमुमेवार्थमुपलक्षयति । सा च कात्यायनेनोक्ता । विनानार्थेऽव
संदेहो हरणं हार उच्यते । नानासन्देहहरणाद् व्यवहार इति स्मृत इति । अथ व्यवहारभेदाः नारदः । सोत्तरोऽनुत्तरश्चैव स विज्ञे-
यो द्विलक्षणः । सोत्तरोऽभ्यधिको यत्र विलेखपूर्वकः पण इति । यदि पराजयेऽहं तदा पराजयदण्डमभ्यधिकमेतावद्दा-
स्यामीति यत्र लिखनपूर्वकं प्रतिज्ञायते स सोत्तर इत्यर्थः । तद्रहितोऽनुत्तर इत्यर्थादुक्तं भवति । स एव चायं दशप्रकारं निब-
न्धनानवान्तरभेदानुद्दिश्य विवृतवान् । यथाह । चतुष्पाच्च चतुःस्थानश्चतुःसाधन एव च । चतुर्हितश्चतुर्व्यापी चतुष्कारी च
कीर्त्तितः । त्रियोनिर्द्व्यभियोगश्च द्विद्वारो द्विगतिस्तथा । अष्टाङ्गोऽष्टादशपदः शतशाखस्तथैव च । धर्मश्च व्यवहारश्च चरि-
त्रं राजशासनम् । चतुष्पाद् व्यवहारोऽयमुत्तरः पूर्वबाधकः । तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिषु । चरित्रं तु स्वीकरणे रा-
जाज्ञायां तु शासनम् । सामाद्युपायसाध्यत्वाच्चतुःसाधन उच्यते । चतुर्णामपि वर्णानां रक्षणाच्च चतुर्हितः । कर्त्तृनथो साक्षिणश्च
सभ्यान् राजानमेव च । व्याप्नोति पादशो यस्माच्चतुर्व्यापी ततः स्मृतः । धर्मस्यार्थस्य यशसो लोकपंक्तेस्तथैव च । चतुर्णां करणा-
देव चतुःकारी प्रकीर्त्तितः । कामात्क्रोधाच्च लोभाच्च त्रिभ्यो यस्मात्प्रवर्त्तते । त्रियोनिः कीर्त्त्यते तेन त्रयमेतद्विवादकृत् । द्व्यभियो-
गस्तु विज्ञेयः शंकातत्त्वाभियोगतः । शंका सतां तु संसर्गात्तत्त्वं होढाभिदर्शनात् । पक्षद्वयाभिसंबन्धाद् द्विद्वारः समुदाहृतः ।

पूर्ववादस्तयोः पक्षप्रतिपक्षस्तदुत्तरः । भूतच्छलानुसारित्वात् द्विगतिः समुदाहृतः । भूतन्तत्त्वार्थसंयुक्तं प्रमादाभिहितं छलं
। राजा सपुरुषः सभ्याः शास्त्रं गणकलेखकौ । हिरण्यमग्निरुदकमष्टांगः समुदाहृतः । ऋणादानं ह्युपनिधिः संभूयोत्थानमे
व च । दत्तस्य पुनरादानमशुश्रूषाभ्युपेत्य च । वेतनस्यानपाकर्म तथैवास्वामिविक्रयः । विक्रीयासंप्रदानं च क्रीत्वानुशय एव
च । समयस्यानपाकर्म विवादः क्षेत्रजस्तथा । स्त्रीपुंसयोश्च सम्बन्धो दायभागोऽथ साहसः । वाक्पारुष्यं तथैवोक्तं दण्डपारु
ष्यमेव च । द्यूतं प्रकीर्णकञ्चैवेत्यष्टादश पदः स्मृतः । क्रियाभेदान्मनुष्याणां शतशाखो निगद्यते इति । यद्यपि प्रतिज्ञादीनां
वक्ष्यमाणानां साक्षाद्व्यवहारस्वरूपघटकत्वाद्व्यवहारपादकत्वं युक्तम् । धर्मादीनान्तु तत्र सत्ये स्थितो धर्म इत्यनारदोक्त
प्रकारेणैव निर्णयमात्रहेतुत्वान्न साक्षाद्व्यवहारपादत्वमर्हं । याज्ञवल्क्यादिभिरत एव तेषामेव व्यवहारपादत्वमनुक्त्वाद्व
चनाभिव्ययेप्रदर्शयिष्यन्ते । तथापि निर्णयाख्यचतुर्थव्यवहारपादहेतुत्वेन गौणमेव व्यवहारपादत्वमेषामत्रोक्तं । व्यव
हारपदेनं निर्णय एव वा लक्ष्यते । तद्धेतुत्वात्तत्पादत्वमिति तद्द्रष्टव्यम् । तथा च बृहस्पतिः । धर्मादीनां निर्णयहेतुत्वं स
एवमेवाह । धर्मेण व्यवहारेण चरित्रेण नृपाज्ञया । चतुःप्रकारोऽभिहितः सन्दिग्धेऽर्थे विनिर्णय इति । गौणानामेषां धर्मादि
पादानामधिकरणकथनम् । तत्र सत्ये स्थितो धर्म इत्यादिना । अत्र माधवीये चरित्रं तु स्वीकरणम् इति पाठं लिखित्वा देशाचार
चरित्रं स्वीकारे सद्देशनिर्णयहेतुरिति व्याख्यातम् । कात्यायनवचनं तत्र । यद्यदाचर्यते येन धर्म्यं वाधर्म्यमेव वा । देशस्या
चरणं नित्यं चरित्रं तद्धि कीर्तितम् । चण्डेश्वरेण तु चरित्रं तु पुस्तकरणमिति पठित्वा पुस्तं पञ्जिका सर्वः । तत्करणमधिकर
णं यस्येति व्याख्यातं तन्न दूढिहीनात्वचनान्तरासम्वादाच्च हेयम् । तेषां निर्णयहेतुत्वं प्रपञ्चितं कात्यायनेन । दोषाकारी तु कर्तृत्वं
धनहारी स्वकं धनं । विवादे प्राप्नुयाद्यत्र स धर्मेणैव निर्णयः । वाक्पारुष्यस्तेयादिदोषकारी व्यवहारप्रवर्तनमंतरेणैवाऽ
नुतापादिना धर्माभिमुखोऽधर्माद्भीतस्स्वस्य दोषकर्तृत्वं स्वयमभ्युपैति । यत्र धनस्वामी धर्माभिमुखाद्धर्मभीरोश्चाऽधम

णादेर्व्यवहारं विनैव स्वकीयं धनमाप्नोति तत्रोभयत्र संप्रतिपत्त्युत्तरइतियावत्। धर्मेणैव निर्णय इत्यर्थः॥ अत एवोक्तं तत्र सत्ये स्थितो धर्म इति। स्मृतिशास्त्रानुयत्किंचित्प्रथितं धर्मसाधकैः। कार्याणां नियमार्थं तु व्यवहारः स्मृतो हि सः। धर्मसाधकैः सभ्यैः स्मृतिशास्त्रं साक्ष्यादिक्रियाप्रत्यायकमर्थिप्रत्यर्थिनोः कार्यनिर्णयार्थं प्रथितं प्रख्यापितं यत्र तत् अनुष्ठानाद्व्यवहारप्रवर्त्तनेन निर्णयकरणमिति यावत्। तत्र व्यवहारो निर्णयहेतुरित्यर्थः॥ अत एवोक्तं। व्यवहारस्तु साक्षिषु तिष्ठति। साक्षिग्रहणं प्रमाणोपलक्षणम्। चरित्रविषयं वचनं पूर्वमेवोपवर्णितम्। न्यायशास्त्राविरोधेन देशदृष्टेस्तथैव च। यं धर्मं स्थापयेद्राजा न्याय्यं तद्राजशासनम्। न्यायशास्त्रं व्यवहारप्रतिपादकं स्मृत्यादिशास्त्रम्। तदविरोधेन देशदृष्टेर्देशाचारस्याविरोधेनेति। सम्प्रत्यान्तर्गतस्यानिष्कृष्यान्वयः राजा यं धर्मं स्थापयेदाज्ञापयेत् न्याय्यमुक्तं राजशासनं अन्यदन्याय्यमित्यर्थात्। तादृशशासनानुरोधेन निर्णयः कर्त्तव्य इत्यर्थः। धर्मादीनामुत्तरोत्तरस्य पूर्वपूर्वबाधकमुत्तरत्र विवक्ष्यते। अथ तेषां विषये स्तेयादीनां संसर्गात्पारदार्यस्तेयादिशंकातयाभियोगः। होडालिंगं चौर्यादिचिह्नं तद्दर्शनात्साक्षाद्दर्शनं वा होडादर्शनं तस्मादनेनैव चौर्यादिकृतमिति निश्चयरूपेणाभियोगस्तत्त्वाभियोग इत्यर्थः॥ हिरण्याग्न्युदकानां यथासम्भवं व्यवहाराङ्गत्वं अष्टादशपदानां निरूपयिष्यन्ते क्रियाभेदादेकैकव्यवहारपदसम्बन्धिव्यापारभेदादनन्तरप्रकारत्वं शाश्वतम्॥ इति व्यवहारभेदः॥ * ॥ अथ सामान्यपरिभाषा॥ तत्र धर्माधिकरणाख्यसभानिरूपणम्। बृहस्पतिः। दुर्गमध्ये गृहं कुर्याज्जलवृक्षान्वितं पृथक्। प्राग्दिशि प्राङ्मुखीं तस्य लक्षण्यां कल्पयेत्सभाम्। माल्यधूपासनोपेतां बीजरत्नसमन्विताम्। प्रतिमालेख्यदेवैश्च युक्तामग्न्यम्बुना तथेति। लक्षण्यां वास्तुशास्त्रोक्तलक्षणेन तु लक्षिताम्। अग्न्यम्बुनेति समाहारद्वंद्वः। सभायां धर्माधिकरणत्वं कात्यायन आह। धर्मशास्त्रानुसारेणार्थशास्त्रविवेचनम्। यत्राधिक्रियते स्थाने धर्माधिकरणं हि तदिति। तत्र सभ्योपवेशनमाह मनुः। यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रयः। राज्ञश्चाधिकृतो विद्वान्ब्राह्मणांस्तां सभां विदुरिति। त्रय इत्युपलक्षणम्। अधिकानामपि स्मृतत्वा

न्। तच्चवक्ष्यते। अधिकृतो विद्वान्प्राड्विवाकः अत्र प्रविशेत्सभाम्। सभामेव प्रविश्येदित्यादिवचनात्सभामुख्यं व्यवहारद
र्शनस्थानम्। अन्यान्यथ मुख्यानि व्यवहारवचनादवगंतव्यानि। दशस्थानानि वादानां पञ्च चैवाब्रवीद्भृगुः। निर्णयं येन
गच्छन्ति विवादं प्राप्य वादिनः। आरण्यास्तु स्वकैः कुर्युः सार्थिकाः सार्थिकैस्तथा। सैनिकाः सैनिकैरेव ग्रामेऽप्युभयवासिभिः।
उभयानुमतश्चैव गृह्यते स्थानमीप्सितम्। कुलिकाः सार्थमुख्याश्च पुरग्रामनिवासिनः। ग्रामपौरगणश्रेण्यश्चातुर्विद्यश्च
वर्गिणः। कुलानि कुलिकाश्चैव नियुक्तान्नृपतिस्तथेति। स्वकैरारण्यकैः ग्रामेपीत्यपिशब्दाद्ग्रामेऽरण्यादौ च निवसन्ति तैरु
भयवासिभिर्निर्णयं कुर्युरुभयव्यवहाराभिज्ञत्वात्तेषां कुलिकाः कुलश्रेष्ठाः। सार्थो ग्रामदेवयात्रादौ मिलितो जनसंघः तन्मु
ख्याः सार्थवाहादयः। पुरं मुख्यनगरम्। तस्मादर्वाचीनो ग्रामः इति पुरग्रामनिवासिनो भेद सार्थः कुलिकादीनि पञ्च स्थाना
नि तानि चारण्यकादीनामेव ग्रामादीनि दश स्थानानि साधारणानि। ग्रामो ग्रामाकारेणावस्थितो जनः। पौरः पुरवासिनां
समूहः। श्रेण्यो रजकाद्यष्टादशहीनजातयः। चातुर्विद्यः आन्वीक्षिक्यादिविद्याचतुष्टयोपेतः। वर्गिणो गणप्रभृतयः। इ
ति सभानिरूपणम्॥ * ॥ अथ व्यवहारदर्शनविधिः। तत्र मनुः। व्यवहारान्दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः। मन्त्रज्ञैर्मन्त्रि
भिश्चैव विनीतः प्रविशेत्सभाम्। तत्रासीनः स्थितो वापि पाणिमुद्यम्य दक्षिणम्। विनीतवेषाभरणः पश्येत्कार्याणि कार्थिणाम्।
प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः। अष्टादशसु मार्गेषु निबद्धानि पृथक्पृथक्। धर्मासनमधिष्ठाय संवीताङ्गः समाहि
तः। प्रणम्य लोकपालेभ्यः कार्यदर्शनमारभेदिति। व्यवहारान्पूर्वलक्षितान्दिदृक्षुर्निर्णिनीषुः। पार्थिवोऽभिषिक्तक्षत्रियः। त
मेवाधिकृत्य प्रजापालनव्यवहारदर्शनादिविधानात्। यथा वृत्तो भवेन्नृप इत्यादिषु। नृपग्रहणात्तु अन्यस्यापि तत्स्थानापन्न
स्य प्रजापालनौपयिकं धर्मजातं भवतीति गम्यते। आसीनः स्थितो वेति सामर्थ्याद्यनुसारेण पूज्यापूज्यार्थिप्रत्यर्थ्यपेक्षया वा व्यव
स्थितो विकल्पः। दक्षिणपाण्युद्यमनं कार्यिणामवधानबोधनार्थं। विनीतवेषाभरणत्वं तेषामपि प्रतिभानिवृत्त्यर्थमुपात्तं। प्र

ण्यहमित्यनेनाह्निकवद्व्यवहारदर्शनस्यावश्यकतोक्ता । देशदृष्टाः श्रुतिस्मृत्यनुक्ता अपि देशाचाररूपास्तदविरुद्धा हेतवो युक्ति
कलापाः । यथोदीच्यमध्यमानां कन्यायाचितुमागताय भोजनदानं कन्याप्रतिश्रवणाप्रतिबद्धमतस्तस्मिन् कृते अवश्यं तस्मै कन्या
दातव्येति निर्णेतव्यम् । एवमन्यदप्यूह्यम् । यथाह कात्यायनः । यस्य देशस्य यो धर्मः प्रवृत्तः सार्वकालिकः । श्रुतिस्मृत्यनुरोधे
न देशदृष्टः स उच्यत इति । मार्गेषु व्यवहारपदेषु । निबद्धानि संबद्धानि धर्मनिर्णयोपयोगित्वाद्धर्मासनं । सम्प्रीतांगो वस्त्राद्या
वृतशरीर इत्यनेन नीतिशास्त्रोक्तं कर्मणादि परिहारोपयोगि सर्वमुपलक्षितम् । समाहितो विक्षेपशून्यः । विक्षेपदशायां तत्त्व
प्रतिभासायोग्यत्वाच्चित्तस्य लोकपालप्रमाणोऽपि तदुपयोगी । याज्ञवल्क्यः । व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह । धर्मशा
स्त्रानुसारेण क्रोधलोभविवर्जित इति । अत्र व्यवहारान् स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहमित्यनेनैव याज्ञवल्क्येन विहितस्य व्यवहा
रदर्शनस्यानुवादो ब्राह्मणसाहित्यादिविधानार्थः । ब्राह्मणग्रहणं क्षत्रियादिव्युदासाय । सहयुक्तेऽप्रधान इति व्याकर
णस्मृतेः । सहार्थतृतीयया तेषामप्राधान्यं गम्यत इति । तत्प्रयोजनमदर्शनान्यथादर्शनयोर्न्न तेषां दोषः । किन्तु राज्ञ एवे
ति बोधनम् । धर्मशास्त्रानुसारेणेत्यनेनैव क्रोधलोभविवर्जिते सिद्धे तद्वर्जनोपादानं क्रोधलोभाभ्यामदर्शनान्यथादर्शनयोर्दो
षातिशयप्रदर्शनार्थम् । न च क्रियानुवादेनानेकगुणविधाने वाक्यभेदः । दर्शनकर्तृतया वाक्यान्तरप्राप्ते तावद्विशेषणवैशि
ष्ट्यस्यैकार्थस्य बोधनात्तदनापत्तेः । पौरुषेयवाक्ये तात्पर्यानुरोधेन तस्यादोषत्वाच्च । ननु सर्वैपि व्यवहारदर्शनविधयो नतावाक्ये
बलाद्दृष्टार्थः । प्रजापालनौपयिकदुष्टादुष्टपरिज्ञानस्य दृष्टस्यावश्यकत्वात् । अत एव विज्ञानेश्वरः । अभिषेकादिगु
णयुक्तस्य राज्ञः प्रजापालनम्परमो धर्मस्तच्च दुष्टनिग्रहं विना न सम्भवति । तत्परिज्ञानञ्च न व्यवहारदर्शनं विनेति व्यवहारदर्श
नमहरहः कर्तव्यमित्युक्तम् । व्यवहारान् स्वयं पश्येदित्यादि । न च तद्देवफलमिति वाच्यम् । स्वर्गादिफलस्यादर्शनान्यथाद
र्शनयोः प्रत्यवायस्य वचनान्तरैर्बोधनात् । तथा च कात्यायनः । स प्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः । ससभ्यः प्रेक्षको रा

। एवमपूर्वपर्यवसायिविधिसम्भवेपिश्रुत्याद्यभावेऽनारम्भविधेरस्यावबोधकत्वात्। अन्यथाध्ययनाध्यापनयोरप्यस्यत्वाप त्तेः। ज्ञानस्यतुवाक्यादेवांगत्वंयदेवकरोतीतिश्रवणात्। येनकर्मणेच्छेत्तत्तज्जयानुजुहुयात्। एवंवितानमभ्यनूद्यग्रहांश्चै वविधानतः। कर्मणांफलमाप्नोतिइतिचश्रवणाज्जपहोमविनायकस्नपनग्रहयज्ञानामिवस्मृत्याद्यधिकारनिवृत्तिश्च। तद्वि धिबोधिताध्ययनोपायकज्ञानाग्निलाभरूपायान्तरस्यज्ञानाग्निद्वारकक्षेपप्रतिक्षेपात्। प्रजापालनंपरंज्योतिष्टोमाद्यपूर्वमेवस्व फलापूर्वञ्जनयतीत्यन्यदेतत्। अत्रब्रूमः। व्यवहारदर्शनोपनतावेवविधेस्तात्पर्यम्। अन्येनुविषयस्वरूपनिमित्तफलोपा धिभेदेनाधिकारविषयःप्रयोगभेदश्चाग्निहोत्रंजुहोतीत्युत्पन्नस्ययावज्जीवमग्निहोत्रंजुहुयात्। अग्निहोत्रंजुहुया त्स्वर्गकाम इत्यत्रेव। अतोनवैरूप्यादिदोषः। दृष्टार्थतयातुनविधिरयम्प्रमाणान्तरसिद्धत्वात्तस्मात्सःयद्यपिव्यवहार शास्त्रेन्यायसिद्धानुवादकास्सर्वप्रायोविषयइत्येतस्यापितथात्वेनबाधकत्वात्तथापिविधित्वेसम्भवत्यनुवादत्वमङ्गीकर्तुमनर्हम्। यत्रतुनदसम्भवस्तत्रनदेवाश्रीयतेव्यवहारशास्त्रत्वादितिसकलनिबन्धस्वरसायातःसमाधिः दृष्टादृष्टपरिज्ञानेनुयद्युपा यान्तरप्राप्त्याव्यवहारदर्शनस्यपाक्षिकत्वंतदास्यनियमविधित्वमेवाध्यापनादिविधीनामिवार्जनोपायतयानइष्टदेवोपास नात्तदर्जनेप्रत्यवायकल्पनवदुपायान्तरात्तद्दृष्टादृष्टपरीक्षयाप्रजापालनेप्यवसेयम्। स्मृत्यादीनाञ्चत्रैवर्णिकत्वानुवर्णा धिकारिकत्वात्। म्लेच्छादीनांयथाकथञ्चिद्दृष्टादृष्टपरिज्ञानेनप्रजापालनेपिनक्षतिः। नचैवंप्रजापालनविधेरप्यभिवि क्तक्षत्रियाधिकारिकत्वादन्येषान्तत्रफलाभावेनाप्रवृत्तिः। दृष्टादृष्ट्यादिलाभार्थंकथंचित्प्रवृत्तावपितस्याधर्माभावप्रसङ्गो न्यथादर्शनादर्शनन्यायप्रवृत्त्यादिनाप्रत्यवायाभावापत्तिश्चेतिवक्तव्यम्। दयाहिंसादिसाधारणधर्मान्तर्भावेणप्रजापाल नस्यतेषामपिधर्मजनकत्वात्। नृपपदेनतत्संयमसम्भवाच्च। तस्मादयमत्रनिष्कर्षः। स्वर्गापवादादिमूलभूतान्वयव्य तिरेकादिन्यायमूलकतायसम्भवतितादृशव्यवहारशास्त्रस्यसर्वस्यसमूलकताकल्प्यते। यदंयोतदसम्भवस्तत्रादृष्टार्थक

॥वी॰मि॰॥
॥ व्य॰ ॥
॥ ६ ॥

हणञ्चापस्तंबेनैतच्छद्मपरामृष्टंद्वादशवार्षिकंप्रायश्चित्तमुपदिष्टं। केचित्तु। गुरुम्वाबालवृद्धौवाब्राह्मणंवाबहुश्रुतम्। आ
ततायिनमायान्तंहन्यादेवाविचारयन्। नाततायिवधेदोषोहन्तुर्भवतिकश्चन। प्रच्छन्नंवाप्रकाशंवामन्युस्तंमन्युमृच्छति।
मन्युःक्रोधोमन्युंहन्तिनतुपुरुषःपुरुषान्तरमित्यर्थवादः। तथा आततायिनमायान्तमपिवेदान्तगंरणे। जिघांसन्तञ्जिघां
सीयान्नतेनब्रह्महाभवेत्। जिघांसीयात्सन्नियाद्दृच्छेदित्यर्थःइत्यादि। अग्निदोगरदश्चैवशस्त्रपाणिर्धनापहः। क्षेत्रदार
हरश्चैवषडेतेह्याततायिनः धनग्रहणेनप्राप्तावपिपृथक्क्षेत्रग्रहणम्स्वल्पस्यापिक्षेत्रस्यशासनाद्यारूढस्यहर्त्ताधनस्यचबहुत
रस्ययेनवृत्तिच्छेदएवमभवितनावतोहर्त्ताततायीतिद्रष्टव्यम्। तथा उद्यतासिविषाग्निश्चशापोद्यतकरस्तथा। आथर्वणेनहं
ताचपिशुनश्चापिराजनि। यदभिधानेनावश्यम्प्राणात्ययोभवतीतितादृशपैशून्यस्यराजगामिनःकर्त्ता। भार्यातिक्रमकारीच
रंध्रान्वेषणतत्परःएवमाद्यान्विजानीयात्सर्वानेवाततायिनः। एवमाद्यानित्यनेनवधतुल्यस्वपीडाकारिणइत्युक्तम्भवति।
उद्यतादिपदसमभिव्यवहारात्प्रवृत्तक्रियाएवाततायिनोनभूतभाविक्रिया। एतेषामाततायिनांवधेदोषाभावप्रतिपादकंव
चनकदंकमर्थशास्त्रम्। आत्मरक्षणार्थत्वात्। इयंविशुद्धिरुदिताप्रमाप्याकामतोद्विजम्। कामतोब्राह्मणवधेनिष्कृति
र्नविधीयतइत्यादिधर्मशास्त्रम्। दृष्टार्थत्वाभावात्। अनयोर्विरोधेसम्भवत्यपिआततायनाततायिविषयत्वेनसामान्यविशे
षभावेनवाध्यबाधकभावविपर्य्ययेधर्म्मशास्त्रत्वान्नान्यशास्त्रमेवबलवत्। आततायिवधेदोषाभावप्रतिपादनन्तुकथञ्चिदन्य
थात्मरक्षणासम्भवेआततायिवधमात्मरक्षणार्थंकुर्वतोऽनपराधत्वाद्राजदण्डाभावमात्रपरमर्थशास्त्रत्वात्। दुर्बलमित्युदा
हरणमर्थशास्त्रधर्मशास्त्रयोर्विरोधःस्यात्। अत्रविज्ञानेश्वरः। दोषाभावमाततायिवधेप्रतिपादयतांगुरुंवेत्यादिवचसांवि
ध्यन्तरशेषत्वादपिशष्टवाशष्टादीनांविधिशक्तिप्रतिबन्धकानांश्रवणाच्चनस्वार्थेपरत्वंकिन्तुशस्त्रंद्विजातिभिर्ग्राह्यंधर्मो
यत्रोपरुध्यतइत्युपक्रम्य। आत्मनश्चपरित्राणेदक्षिणानाञ्चसंगरे। स्त्रीविप्राभ्युपपत्तौचघ्नन्धर्मेणनदुष्यतीतिआत्मार

क्षणे दक्षिणादीनां यज्ञोपकरणानां रक्षणे युद्धे च स्त्रीविप्रानुग्रहनिमित्तञ्चाततायिनमकूटशस्त्रेण घ्नन्न दोषभागिति दण्डाभा
वमुक्त्वा तदर्थवादोयमुच्यते। गुरुं वेत्यादि गुर्वादीनत्यन्तावध्यानप्याततायिनो घ्नतो न दोषः। किमुत यदन्यानिति कैमुतिक
न्यायेन स्तुतिप्रतीतेर्न गुर्वादीनां वध्यत्वप्रतीतिः। स्वार्थपरत्वे गुर्वादीनामाततायिवधे दोषोऽन्यत्र गोब्राह्मणादिति स्मृत
न्त्यनुवचनविरोधश्च। यच्च। आचार्यञ्च प्रवक्तारं मातरं पितरं गुरुम्। न हिंस्याद्ब्राह्मणान् गाश्च सर्वांश्चैव तपस्विनः इति मनु
वचनम्। तदपि ब्राह्मणादिहननस्य वचनान्तरैरेव निषिद्धत्वादाततायिनामपि तेषां वधो न कार्य इति। अर्थकात्वरएवार्थव
दिति। तद्विरोधेपि गुर्वाद्याततायिवधस्य दोषाजनकत्वे। ननु गुरुं वेत्यादिवचसां त्वन्मते स्तुतिपरत्वेनाततायिवधदोषाभा
वाप्रतिपादकत्वात् प्रसक्तदोषाभावप्रतिप्रसवत्वे च यच्चेमित्यनाततायिनामेव तेषां वधे दोषातिशयप्रतिपादनार्थत्वेन मानवस्या
र्थवत्त्वमिति न तद्विरोध इति चेत्। नैवम्। यस्य मते तेषां वचनानामाततायिवधे दोषाभावप्रतिपादकत्वं तं प्रति प्रतिप्रसवार्थ
त्वापादने विरोधपादने विज्ञानेश्वरतात्पर्यात् तर्हि तस्य भवन्मते दोषातिशयार्थत्वावश्यम्भावात्तन्मतेपि तथैवास्तु। क्वचिद्विरो
ध इति चेत्। भ्रान्तोसि। उभयत्र गुर्वाद्युपादाने विरोधप्रसक्तेरपरिहार्यत्वात्। विज्ञानेश्वरमते त्वर्थवादकल्पयोरन्यग
त्यसम्भवे हिंसानभिसन्धिनात्मरक्षणे प्रमादोपजातगुर्वाद्याततायिभिन्नाततायिवधे राजदण्डाभाव लघुप्रायश्चित्तयोर्गुर्वा
दिविषये त्वपवादार्थमनुवचनमित्यदोषः। वस्तुतस्तु शस्त्रं द्विजातिभिर्ग्राह्यमित्यनेनोक्तस्याततायिवधे दोषाभावस्य प्राय
श्चित्तराजदण्डाभावयोश्चाचार्यादिविषयेऽपवादार्थं मानवम्। आततायिवधे दोषाभावश्च पलायनादिनाकेनापि प्रकारेणा
त्मरक्षणासम्भवे बोध्यः। अन्यथा वचनस्यादृष्टार्थत्वं हिंसादोषप्रतिपादकशास्त्रस्याततायिदोषेऽत्यन्तावाधश्चेत्युभ
यमप्यन्यायमापद्येत। गुर्वादिविषयकदोषाभावस्य प्रतिपादकार्थवादस्य वानाततायिगुर्वादिवधापेक्षयाततायितद्वधे
दोषाल्पत्वप्रायश्चित्ताल्पत्वे राजदण्डाभावश्चेत्यर्थं वचनानि स्तुत्युपयोगिगुणवाद इति ॥ * ॥ अत्र भट्टभवदेवः ॥ ● ॥ स्वा

ध्यायिनं कुले जातं हन्यादेवाततायिनम्। न तेन ब्रह्महा स स्यान्मन्युस्तं मन्युमृच्छतीति। वसिष्ठवचनात्तदेकवाक्यतया वा शस्त्रा
दिग्रहणेऽपि गुर्वादिवाक्यानाम्प्रतिप्रसवविधित्वमेव न त्वर्थवादत्वम्। न च सुमन्तुवचनेनाततायिवधदोषोऽन्यत्र गोब्राह्मणादि
त्यनेन विरोधः। सूत्रच्छेदापरिज्ञानात्। तथाहि। सूत्रत्रयमिदम्। आततायिवधेनेत्येकं १। दोषोऽन्यत्रेत्यपरम् २। गोब्रा
ह्मणात्स्नातः प्रायश्चित्तं कुर्यादित्यन्यत् ३। तत्र ब्रह्मवधप्रायश्चित्तम् आयस्तैः सम्बन्धं कुर्यात्तस्याप्येतदेव प्रायश्चित्तमित्यभिधा
यसुमन्तुराह। आततायिवधेनेति। आततायिनो ब्राह्मणस्य वधे न तेन प्रायत्तमिति प्रथमस्य सूत्रस्यार्थः। दोषोऽन्यत्र। आ
ततायिव्यतिरिक्ते दोष इति द्वितीयस्य। गोब्राह्मणात्स्नातः प्रायश्चित्तं कुर्यादिति प्रायश्चित्ताङ्गस्नानविधायकम्। तत्र गोहेतु
कं स्नानम्। व्यास आह। श्रूयन्ते यानि तीर्थानि त्रिषु लोकेषु नित्यशः। अभिषेकः समस्तेषां गवां शृङ्गोदकस्य चेति। ब्राह्म
णशब्देनात्र विधायकं वाक्यमुच्यते। तद्धेतुकं स्नानमघमर्षणादिजपादिपूर्वकम्। द्वन्द्वैकवद्भावश्च गोब्राह्मणादिति। तेन
गोहेतुकब्राह्मणहेतुकस्नानाभ्यां प्रायश्चित्ताधिकारी भवति न स्नानमात्रेणेति तृतीयस्येति। यदपि भविष्यपुराणवचनम्।
हत्वानुप्रहरन्तं वै ब्राह्मणं वेदपारगम्। कामतोऽपि चरेद्वीरं द्वादशाब्दाख्यमुत्तमम् इति। तदपि नाततायिवधविषयम्। प्र
हारशब्दस्य वधायकत्वात्। तेनायमर्थः। यच्चक्षुराद्यवयवानाम्प्रकर्षेण हरणे प्रवृत्तस्तद्वधेऽपि कामतोऽपि द्वादशवार्षिकमेव
प्रायश्चित्तमित्यर्थ इत्याह। तदयुक्तम्। आचार्यं चेत्यस्य मानवस्योक्तयुक्तिवशादाततायिन्याचार्यादिवधे दोषप्रतिप्रसवार्थत्व
स्यापादितत्वात्तदेकमूलतया सुमन्तुवचनस्य भिन्नाक्षरोक्तच्छेदेनैव व्याख्यातुमर्हत्वात्। तदुक्तच्छेदे दोषोऽन्यत्रेत्यस्य वैयर्थ्या
पत्तेश्च। गोब्राह्मणादित्यस्य स्नानहेतुत्वे पञ्चमीति व्याख्याने गोशब्दस्यावयविवाचकस्याऽवयवशृङ्गलक्षणायां लक्षितलक्षणापत्तेः
। गोस्नानाहेतुत्वात्। ब्राह्मणस्य ज्ञापकहेतुत्वाद्गोश्च कारकहेतुत्वस्य क्लिष्टस्य ग्रहणाद्वैरूप्यादिदोषप्रसङ्गाच्च। यदपि भविष्य
पुराणीयवचनव्याख्यानं तत्तु न्यायनयबहिर्मुद्रम्। ताडनादिवधपर्यन्तं तद्देहपीडने रूढस्य प्रहरतेश्चक्षुराद्यवयवप्राकर्षण

हरणेयोगग्रहणस्यरथकारनयविपरीतत्वात् । किञ्च । चक्षुराद्यवयवोद्धरणप्रवृत्तब्राह्मणवधेकामकृतेपिद्वादशाब्दमेवब्र
ह्मवधप्रायश्चित्तंनतुकामकृताऽन्यब्रह्मवधवत्प्रायश्चित्तद्वैगुण्यंमरणांतिकंवेत्यस्यैतद्वचनादिसंहितस्यप्रायश्चित्तह्रासप्रयो
जकदोषाल्पत्वस्याततायित्वमेवनिमित्तमन्यासम्भवात्स्वपाणित्वेताततायित्वन्तस्यैवसत्वाच्च । तथाचनाततायिविषयमिद
मित्यसम्बन्धंचाततायिन्यदोषोन्यत्र । गोब्राह्मणंयदाहन्यात्तदाप्रायश्चित्तंकुर्य्यात् । शिखावानपिगोविप्रंनहन्याद्वैकदाच
नेत्याभ्यांसंवर्त्तभविष्यवचनाभ्यांविरोधस्यसर्वथादुष्परिहरत्वाच्चविध्यंतरशेषभूतस्यविधिशक्तिप्रतिबन्धकापिशब्दादिमतोर्गुर्वा
दिवाक्यप्रतिप्रसवविधित्वस्याभ्युपगन्तुमशक्यत्वाच्च । नचविध्यशेषभूतानांवसिष्ठादिवचसामर्थवादत्वमसम्भवतीतिगुर
वेत्यादीनामपिनार्थवादत्वंविध्यन्तरशेषत्वात्तेषामर्थवादत्वेपिवास्मदभिप्रेतत्वार्थसिद्धेर्वचनान्तरैःपरतन्त्रैरङ्गीकृतत्वान्नक्ष
तिरितिवाच्यम् । यतस्तेषामपिगोब्राह्मणाद्याततायिवधदोषप्रतिपादकबहुतरवचनान्तरविरोधाद्दोषाल्पत्वप्रतिपादक
त्वेनतदेकमूलकतालाभायोचिताऽन्यथादुःपरिहरत्वाद्विरोधस्येत्येतावत्तुविस्तरः । शूलपाणिस्तु । नाततायिवधेदोषात्किल्वि
षंप्राप्नुयात्क्वचित् । विनाशार्थिनमायान्तंघातयन्नापराध्नुयादितिबृहस्पतिवचनम् । आततायिवधस्यादोषताप्रमाणत्वेना
पन्यस्यकिल्विषाभावःप्रायश्चित्तनिषेधार्थः । अपराधाभावस्तुदण्डनिषेधार्थइतिचव्याख्यापयतसर्वतआत्मानंगोपायेदिति
श्रुतिमूलकमिदमतःपलायनादिनाप्यात्मरक्षणासम्भवपरमितितत्तात्पर्यमुपवर्ण्यगुरवेत्यादिमन्वादिवचनान्यपितदुपष्ट
म्भकतयाप्रदर्श्यआततायिन्यदोषइत्यादिसंवर्त्तवचनंशिखावानित्यादिभविष्यवचनञ्चपूर्वोक्तत्वाद्विरोधित्वेनाशंक्यव्यवस्था
मेवमुक्तवान् । इत्यपेक्षयातपोविद्याजातिकुलैरुत्कृष्टोब्राह्मणगुर्वादिराततायिनवध्यः । समोपकृष्टस्तुवध्यः । तथाच
कात्यानः । आततायिनिचोत्कृष्टेतपःस्वाध्यायजन्मतः । वधस्तत्रतुनैवस्यात्पापंहिनवधेतुनेति । अतएवगीतायामुक्तम्
। पापमेवाश्रयेदस्मान्हत्वैतानाततायिनइति । एतान्भीष्मादिनस्मत्तोप्यत्युत्कृष्टानाततायिनोपिहत्वाऽस्मान्पापमेवाश्र

येदेवेत्यर्थः । उत्कृष्टाततायिहनननान्निवृत्तौपातकमप्युक्तम् । बृहस्पतिना । आततायिनमुत्कृष्टं वृत्तस्वाध्यायसंयुतं । योन
हन्याद्वधप्राप्तं सोऽश्वमेधफलंलभेदिति । तेनोत्कृष्टाततायिवधनिवृत्तौतद्वधप्रसक्तप्रत्यवायपरिहारोऽश्वमेधफलञ्चसंयोगपृ
थक्त्वन्यायात् । यद्यपिगुरुम्वेत्युक्तंहन्यादितिश्रूयतेगुरोश्चशिष्यापेक्षयोत्कृष्टत्वमेवेतितत्रव्यवस्थेयंदुःखस्थातथापिगुरो
रपिसकाशात्कुलविद्यातपःप्रभृतिभिर्गुणैःशिष्यस्याप्युत्कर्षःसम्भवतीतिसुस्थैवतत्रापिव्यवस्थेयम् । गौस्त्वाततायिन्यप्यविशेषे
णावध्येतिविरोधिवचनाभावात् । एतेषाञ्चाततायितापयोजकव्यापारगोचरवर्त्तमानप्रवृत्तिकानामेवहन्तव्यानामप्याततायि
नांहननेदोषाभावोनतुनिवृत्तव्यापारकाणामपि । उद्यतानांतुपापानांहन्तुर्दोषोनविद्यते । निवृत्तानान्तथारम्भाद्ग्रहणन्नव
धःस्मृतइतिकात्यायनवचनादिति । तदपिनक्षोदक्षमम् । तथाहि । नहिंस्यादितिनिषेधावधारितस्यदोषस्यशस्त्रंद्विजा
तिभिर्ग्राह्यमित्यादिनाआततायिविषयेऽपवादमभिधायतदर्थवादत्वेनगुरुंवेत्याद्युक्त्वामनुसुमन्तुसम्वर्त्तभविष्यादिवचनेगौब्राह्म
णादिविषयेतत्प्रतिप्रसूयचरितार्थेषुसर्वेषुवचनेषुकात्यायनीयमाततायिनिचोत्कृष्टाइत्यादिवचोपिमन्वादिवचनोपात्ताचा
र्यब्राह्मणाद्युत्कर्षमेवादायतदेकार्थकमेवोचितंनतुतेषामुत्कृष्टाचार्यादिविषयकतयासंकोचकं । तपःस्वाध्यायजन्मतश्चेत्य
नेनापिब्राह्मणत्वादिकृतोत्कर्षस्यैवोपलक्षणात् । किञ्चाततायिवधेदोषाभावस्योत्कर्षमात्रेणापवादस्तवाभिमतः । गीतास्थ
स्यैतत्पदस्यतदुपष्टम्भकत्वमधमवर्णावध्यत्वमुत्तमवर्णाततायिनोवदतः । तथाचसामान्यतोब्राह्मणत्वादिपुरस्कारेणतदप
वादकवाक्यानामानर्थक्यमेवस्यात् । तस्योपसंहारविषयत्वात् । यत्रहिमित्रविन्दावत् द्वयोरर्थवत्त्वंतत्रसामान्यविशेषोपसं
हारःस्वीक्रियते । अनुत्कृष्टतद्वधेऽपिदोषाभावस्यैवाभ्युपेतत्वात् । गुरुम्वेत्यादिवचनञ्चसाम्प्रतिप्रसवविधित्वेनत्वयाभ्युपे
तानांकात्यायनीयैकवचोनुरोधेनोत्कृष्टमात्रेणोपलक्षणत्वमानर्थक्यापरपर्यायएव । यद्वागोत्वब्राह्मणत्वादिनिमित्तप्रति
प्रसवेकृतेकात्यायनीयमुत्कर्षनिमित्तदोषातिशयप्रतिपादकम्भविष्यतीतिसमस्तवचनसामञ्जस्यसम्भवेवचनस्वरसभङ्गाणी

उत्कृष्टवदनिमित्तोपकारितायोग्यत्वम् । संयोगपृथक्त्वात् । तथाप्यश्वमेधपदमन्यार्थेनैव

करणाभ्युपगमाङ्गीकरणमेव । प्रायश्चित्तरूपम [illegible]

प्रसङ्गादविवक्षितमथवा तत्र श्रुतब्रह्महत्यातरणान्तःकरणापापानुपपत्तेः । फलाभावादिति प्राच्यामेव व्याख्यानं साधीयः । तारतम्ये

येते । फलपदन्तु पक्षेऽस्मिन्न समञ्जसं निषिद्धनिवृत्तौ पापानुपपत्तेः । किञ्च । आततायिब्राह्मणादिवधस्यादोषताप्रतिपादकतया

तथाश्वमेधफलमत्रापि भवतीति तात्पर्यानर्थक्यमिति समाधेयम् । भ्रूणमपीत्यादीनामुत्कर्षप्रतिपादकत्वात् । कथमुत्कर्षदोषपरं कात्या

यनाभिमतेषु कात्यायनदेवलादिवचनेष्वपि वेदान्तगं भ्रूणम् । यच्च देवलवचनम्भवतोदाहृतम् । उद्यम्यमानमाया

यनीयमानमाततायिनिर्घोत्कृष्ट इति वचनस्तद्विरोधसमाधानमसहं स्यात् । भ्रूणः उत्तमब्राह्मणविशेषः । दोषप्रसक्ति

त्कम्भ्रूणमप्याततायिनम् । निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेदिति ।

नियमार्थमिति व्याख्यातञ्च । तदप्यसम्बद्धम् । नह्याततायिहनने दोषः कस्यापि संमतः । किन्तु तद्धनने दोषाभावमात्रम् । त

स्मादन्यथात्मरक्षणासम्भवे तद्धनने स हत्यैव भ्रूणहत्या प्रसज्यत इत्यात्मरक्षणविधिप्राप्तानुवादमात्रमेतदिति व्याख्येयम्

। तस्मादाततायिनि चोत्कृष्ट इत्यादिकात्यायनवचनमस्मदुक्तरीत्यास्तु मन्तु संवर्त्तादिवचः समानार्थतयोत्कर्षप्रयुक्तदोषाभि

प्रायपरतया वा वर्णनीयम् । ननु विरोधेऽप्यवस्थापकतयेत्यलमतिदूरङ्गत्वा मम तु प्रतिभाति यद्यपि गुरुत्वेऽप्यादीनाम्प्रतिप्र

सवविधित्वेन तेषामर्थशास्त्रत्वम् । अदृष्टदोषाभावस्याप्यदृष्टत्वेन दृष्टार्थत्वाभावात् । तथात्मरक्षणमात्रार्थेन तथा समि

प्रायश्चित्तप्रसङ्गात् । न चेष्टापत्तिः । तत्तेन ब्रह्महा भवेत् । आततायिन्यदोषेऽन्यत्र गोब्राह्मणाश्चुदाहन्यात्तदा प्रायश्चित्तं कु

र्यात्पापमेवाश्रयेदस्मानित्यादिषु पापतद्भावयोरस्पष्टमवगमात् । तस्मात्सर्वं मते पृथग्धर्मशास्त्रविरोधोदाहरणमिदमि

त्यसङ्गतमिवेत्यलम्प्रसक्तानुप्रसक्तविचारप्रपञ्चेन । प्रकृतमनुसरामः । व्यवहारदर्शनकालमाह । कात्यायनः । समास्था

नेषु पूर्वाह्णे कार्याणां निर्णयं नृपः । कुर्याच्छास्त्रप्रणीतेन मार्गेणामित्रकर्षणः । दिवसस्याष्टमम्भागं मुक्त्वा भागत्रयन्तु यत् । स

कालोव्यवहाराणांशास्त्रदृष्टःपरःस्मृतइति। अत्रसभास्थानेष्वित्यादिसर्वमनुवादः। कात्यायनेनैववचनान्तरैर्विहितत्वात्।
पूर्वाह्णमात्रंविधेयन्तदपिदृष्टार्थंतदाबुद्धिप्रसादात्कार्यान्तराव्यावृतत्वाच्च। तत्रविशेषोदिवसस्याष्टमंभागमित्यादिनोक्तः।
अष्टमोभागःप्रथमप्रहरार्द्धम्। भागत्रयन्तदुत्तरमावर्त्तनात्प्राक्तनम्। अन्यथापूर्वाह्णविधिविरोधात्। प्रथमप्रहरार्द्धस्या
गोपिनित्यहोमादिबाधपरिहारौपयिकंतयादृष्टार्थएव। अत्रवर्ज्यास्तिथीराह। संवर्त्तः। चतुर्दशीममावास्यापौर्णमासीत
थाष्टमी। तिथिष्वासुनपश्येत्तुव्यवहारंविचक्षणइति। एतत्प्रतिषेधस्त्वदृष्टार्थएवदृष्टासम्भवात्। भोजनाश्रितदिगा
दिप्रतिषेधवत्। स्पष्टशास्त्रानुपलम्भेतुदेशव्यवहारानुरोध्येवनिर्णयः। कार्यइत्यप्याहसएव। तस्माच्छास्त्रानुसारेण
राज्ञाकार्याणिसाधयेत्। वाक्याभावेतुसर्वेषांदेशदृष्टमतंनयेत्। अत्रपूर्वार्द्धमनुवादः। उत्तरार्धन्तुन्यायमूलकम्। म
नुः। जातिजानपदान्धर्म्मान्श्रेणीधर्मांस्तथैवच। समीक्ष्यकुलधर्मांश्चस्वधर्मंप्रतिपालयेत्। जातिजानपदान्। जातिप्रयु
क्तान्देशप्रयुक्तांश्चधर्मान्। श्रेणयएककर्मोपजीविनोवणिक्कृषीवलादयः। स्वधर्मेराजप्रवर्त्तितंधर्मं। मदनरत्नेतुस्वधर्मंदु
ष्टदण्डेनरूपमितिव्याख्यातम्। तदनुवादमात्रत्वापत्तेर्हेयम्। कुलधर्मलक्षणमभिहितम्। कात्यायनेन। गोत्रस्थितिस्तुया
येषांक्रमादायातिधर्मतः। कुलधर्मन्तुतंप्राज्ञःपालयेत्तत्तथैवतु। बृहस्पतिः। देशजातिकुलानांचयेधर्माःप्राक्प्रवर्तिताः।
तथैवतेपालनीयाःप्रजाप्रक्षुभ्यतेऽन्यथा॥ जनापरक्तिर्भवतिबलंकोशश्चनश्यति। उद्ह्यतेदाक्षिणात्यैर्मातुलस्यसुताद्विजैः
॥ मध्यदेशेकर्मकराःशिल्पिनश्चगवाशिनः। मत्स्यादाश्चनराःसर्वेव्यभिचाररताःस्त्रियः॥ उत्तरेमद्यपानार्य्यःस्पृश्यान्नृणांरज
स्वलाः। खशजाताःप्रगृह्णन्तिभ्रातृभार्यामभर्तृकाम्॥ अनेनकर्मणानैतेप्रायश्चित्तदमार्हकाइतिसर्वइत्यनेनस्मृतिविरोधउ
क्तः। पूर्वइतिकल्पतरौपाठः। तत्रपूर्वदेशइत्यर्थः। दमोदण्डः। यत्तुस्मृत्यन्तरेष्वेतत्कर्मकरणेप्रायश्चित्तदण्डस्मरणन्त
देतद्वचनानुपात्तदेशविषयमिति। मदनरत्नाकरः। वयन्तुप्रजाप्रक्षोभादिदृष्टदोषकथनाद्ग्राह्यातत्रदण्डोनकार्यएव। प्रा

श्चित्ताभावस्तुव्यवहारविषयः । परलोकसुखार्थम्प्रायश्चित्तंभवेदित्येवेतिनस्मृत्यंतरविरोधः । तत्रहेयव्यापकश्रुतिस्मृति
विरुद्धाचरणोव्यवहारप्रतिबन्धिकाशक्तिस्तज्जन्यपापस्यनाशिनरकजनिकास्त्वेव । उपक्रमपर्यालोचनादेतावदर्थकत्तयेव
चैतद्वचनोपपत्तौसर्वथादोषाभावकल्पनस्यानुचितत्वात् । अतएवाप्रसक्तमेवेनोक्तं । देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः । प्र
माणमिति । येषांपरंपराप्राप्ताःपूर्वजैरप्यनुष्ठिताः । तएवतैर्नदुष्येयुराचारान्नेतरेपुनरिति । नदुष्येयुरव्यवहार्यास्सजदृश्या
श्चनभवेयुरित्यर्थः । अन्यथैतयोरेववचनयोःपरस्परविरोधाद्व्यवहारःस्यादितिब्रूमः । यानितुवचनानिश्चासः । वर्णशि
ल्पिप्रभृतिषुकृषिरंगोपजीविषु । अशक्योनिर्णयोह्यन्यैस्तज्जैरेवतुकारयेत् । बृहस्पतिः । कीनाशाःकारुकाःशिल्पिकुशीदि
श्रेणिनर्तकाः । लिङ्गिनस्तस्कराःकुर्युःस्वेनधर्मेणनिर्णयम् । कीनाशाःकर्षकाः । कारुकावर्धक्यादयः । शिल्पिनश्चित्रकारा
दयः । कुशीदिनोवार्द्धुषिकाः । लिंगिनःपाशुपतप्रभृतयः । मनुः । आश्रमेषुद्विजातीनांकार्येविवदतांमिथः । नविब्रूयान्नृ
पोधर्मंचिकीर्षुर्हितमात्मनः । यथार्हमेतानभ्यर्च्यब्राह्मणैःसहपार्थिवः । सान्त्वेनप्रशमय्यादौस्वधर्मंप्रतिपादयेत् । आश्र
मेषुकार्य्ये । आश्रमसम्बन्धिनिकार्य्येविब्रूयात् । विरुद्धवचनस्यसामान्यतएवप्रतिषिद्धत्वात् । प्रशमय्यकोपमपनीय । बृ
हस्पतिः । तपस्विनांतुकार्य्याणित्रैविद्यैरेवकारयेत् । मायायोगविदाचैवनस्वयंकोपकारणात् । कोपकारणात्तेषांकोपप्रसं
गात् । कात्यायनः । सम्यक्विज्ञानसम्पन्नेनोपदेशम्प्रकल्पयेत् । उत्कृष्टजातिशीलानांगुर्वाचार्य्यतपस्विनाम् । सम्यग्विज्ञा
नसम्पन्नेनेतितृतीयांतम्पदम् । तथाचतज्ज्ञानोत्कृष्टजातिशीलानांगुर्वाचार्य्यतपस्विनामुपदेशम्प्रकल्पयेत् । कारयेत् । न
स्वयमुपदेशम्प्रकल्पयेत् । कारयेत् । नस्वयमुपदेशन्तेषांकुर्य्यादित्यर्थः । तानितःसर्वथाराज्ञोव्यवहारदर्शनप्रतिषेधप
राणिकिन्तुतत्तत्कार्य्येवणिकादीनामभियुक्तत्वात्तान्विहायनव्यवहारनिर्णयः । करणीयइत्येवम्पराणियथाक्रः । अभियुक्ता
श्चयेयत्रयन्निबन्धनियोजनाः । तत्तत्गुणदोषाणान्तएवहिविचारकाइति ॥ तत्रतत्तमभियोगविशेषात्स्यादितिजैमिनिरः

पिसाधुशब्दाधिकरणेऽसूचयामास। अतएव चिकीर्षुर्हितमात्मनः। सान्त्वेन प्रशमव्याकोपकारणादित्यादिहेतुप्रदर्शनम्। यथा तत्त्वावधारणं स्यादनिष्टनिवारणञ्च भवति तथा कौशलेन निर्वाहणीयमित्यत्र तात्पर्यम्॥ * ॥ अथ प्राड्विवाकलक्षणम्। विवादे पृच्छति प्रश्नम्प्रतिप्रश्नन्तथैव च। प्रियपूर्वं प्राग्वदति प्राड्विवाकस्ततः स्मृतः। इति बृहस्पतिः। व्यासोपि। विवादानुगतं पृष्ट्वा स सभ्यस्तत्प्रयत्नतः। विचारयति येनासौ प्राड्विवाकस्ततः स्मृत इति। गौतमेन तु बृहस्पतिवद्योगार्थः। प्राड्विवाकशब्दस्य दर्शितः। प्राड्विवाके वादिप्रतिवादिनौ पृच्छतीति प्राट् ताभ्यामुक्तं सभ्यैः सह विविच्य ब्रवीतीति विवाक इति। बृहस्पतिना। विचारयत्यभिधानाद्विविनक्तीति विवाकशब्दस्य व्युत्पत्तिरुक्ता विवक्तीति विवाक इति। इति गौतमेन। नारदहारीतौ। यथा शल्यं भिषक्कायादुद्धरेद्यन्त्रयुक्तितः। प्राड्विवाकस्तथा शल्यमुद्धरेद्व्यवहारतः। इति। शल्यश्चाधर्म्मस्याधर्ममिश्रणम्। यथा च मनुः। विद्धो धर्मो ह्यधर्मेण सभां यत्रोपतिष्ठते। शल्यं चास्य न कृन्तन्ति विद्धास्तत्र सभासद इति अयञ्च राज्ञा स्वयं व्यवहारदर्शने क्रियमाणेऽसहायः स प्राड्विवाक इति स्मरणात्। यदा तु सभाकार्यान्तरव्यग्रतया स्वास्थ्याभावेन वा स्वयं व्यवहारदर्शनासमर्थस्तदा तत्प्रतिनिधिः। यदा स्वयं न कुर्य्यात्तु नृपतिः कार्य्यदर्शनम्। तदा नियुञ्ज्याद्विद्वांसं ब्राह्मणं कार्य्यदर्शने। सोऽस्य कार्य्याणि सम्पश्येत्सभ्यैरेव त्रिभिर्वृतः। सभामेव प्रविश्याग्र्यामासीनः स्थित एव सः। इति मनुवचनात्। सभ्यग्रहणादमात्यादिनिवृत्तिः त्रिग्रहणात्संख्यान्तरनिवृत्तिः। सभ्यानामिति स्मृतिचन्द्रिकाकारः। तच्चादृष्टार्थत्वप्रसंगादयुक्तमित्युपलक्षणत्वमेव न्याय्यं त्रयस्य नाह्यर्थवशाद्व्यवहारानपेक्षत्वात्। सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित्। इति याज्ञवल्क्यवचनाच्च। यदा न कुर्य्यान्नृपतिः स्वयं कार्यविनिर्णयम्। तदा तत्र नियुञ्जीत ब्राह्मणं शास्त्रपारगम्। दान्तं कुलीनं मध्यस्थमनुद्वेगकरं स्थिरम्। परत्रभीरुं धर्म्मिष्ठमुद्युक्तं क्रोधवर्जितम् इति। कात्यायनस्मरणाच्च। शास्त्रपारगं वक्ष्यमाणशास्त्राभियोगशालिनम्। यथाह कात्यायन एव। एकशास्त्रमधीयानो न विद्यात्कार्यनिर्णयम्। तस्माद्बह्वागमः कार्य्यो विवादेषूत्तमो नृपैः। एवंविधब्राह्मणाभावे क्षत्रि

नःस्वकादिव्याभिर्निर्णयकामाधिकारयोस्तस्यैवयद्दयाप्रजापालनाधिकारश्च ॥ ७ ॥ अथसभ्याः । तत्रयोगीश्वरः । श्रुताध्यय
नसम्पन्नाःधर्मज्ञाःसत्यवादिनः । राज्ञासभासदःकार्यारिपौमित्रेचयेसमाइति । श्रुतेनमीमांसाव्याकरणादिश्रवणेनवेदाध्यय
नेनचसंपन्नाःधर्मज्ञाःसत्यवादिनः । सत्यवदनशीलाःरिपौमित्रेचसमाःद्वेषरागशून्याःएवंविधासभासदःसभायांसदसियथा
सीदंतियथादानमानसत्कारैःराज्ञाकर्तव्याःसभ्यत्वेनवरीतव्याइत्यर्थः । अतस्तेषामुपादेयत्वात्स्वाध्यायोध्येतव्योपूर्वविधिनापुरो
हितस्तत्प्रवृत्तीत्यादिवत्सभ्यपिकर्तव्येनुबद्ध्यत्वात्तद्वत्तैकवदुक्तत्वंविवक्षितम् । यच्चयद्यपिकपिञ्जलनयेनत्रित्वमात्रेणापि
चरितार्थस्तथापिस्मृत्यंतरैकवाक्यत्वविकल्पपरम् । तथाचवृहस्पतिः । लोकवेदज्ञधर्मज्ञाःसप्तपञ्चत्रयोपिवा । यत्रोपविष्टावि
प्राःस्युःसायज्ञसदृशीसभेति । मनुनातुत्रयएवोक्ताः । यस्मिन्देशेनिषीदन्तिविप्रावेदविदस्त्रयइति । अत्रत्रिभ्योन्यूनाः
सप्तभ्योधिकाश्चनकार्याइत्यत्रतात्पर्यंसंख्यावैषम्यन्तुभूयोल्पविरोधेभूयसांस्यात् । स्वधर्मत्वमितिन्यायेनविप्रतिपत्तावधिकसंख्या
वचनमादरणीयंगुणसाम्यैः । तद्वैषम्येतुशतमप्यन्धानान्नपश्यतीतिन्यायेनगुणवत्तरवचनमेवेतिप्रदर्शनार्थम् । य
त्तुचत्वारोधर्मज्ञाःपर्षत्त्रैविद्यमेववा । साब्रूतेयंसधर्मःस्यादेकोवाध्यात्मवित्तमइति । योगीश्वरेणविषमसंख्यत्वमपिवक्तव्यम
पिचानादृतम् । ननुपूर्वोक्तानान्धर्मकारकज्ञापकहेतूनांसन्देहनिर्णयविषयप्रक्रमात् । व्यवहारविषयेतुत्र्यवराणांविषम
संख्यानामेवसभ्यत्वंविशेषविधानादित्यवसेयम् । एतेचब्राह्मणाएव । मनुवृहस्पतिभ्यांविप्रपदोपादानात् । सतुसभ्यैःस्थि
रैर्युक्तःप्राज्ञैर्मौलैर्द्विजोत्तमैः । धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैरितिद्विजोत्तमपदस्यचकात्यायनेनोपादानात् । नार
दः । राज्ञातुधार्मिकान्सभ्यान्नियुञ्ज्यात्सुपरीक्षितान् । व्यवहारधुरंवोढुंयेशक्ताःपुङ्गवाइव । धर्मशास्त्रेषुकुशलाःकुली
नाःसत्यवादिनः । समाःशत्रौचमित्रेचनृपतेःस्युःसभासदइति । पुङ्गवाइवेतिस्मृतिचन्द्रिकायांपाठः । मदनरत्नेतुसद्गवा
इतिपठित्वासद्गवाउत्तमवृषभाइतिव्याख्यातम् । कल्पतरावपिसद्गवाइतिएवपाठः । सब्राह्मणपुरोहितःसभ्यइतिपूर्वादा

त्वात् । अथ सभ्यानां बलाबलम् । याज्ञवल्क्यः । नृपेणाधिकृताः पूगाः श्रेणयोऽथ कुलानि च । पूर्वं पूर्वं गुरु ज्ञेयं व्यवहार
विधौ नृणामिति । नृपेण सज्ञाधिकृता व्यवहारदर्शने नियुक्ताः । पूगाः समूहाः । भिन्नजातीनां भिन्नवृत्तीनामेकस्थान
वासिनां ग्रामनगरादिस्थानाम् । श्रेणयो नानाजातीनामेकजातीयकर्मोपजीविनां संघाताः । हेडावुकतांबूलिककुविन्दचर्म
कारादीनाम् । कुलानि ज्ञातिसम्बन्धिबन्धूनां समुदायाः । एतेषां यत्पूर्वं पूर्वं पाठक्रमेण प्रथमावगतं तत्तद्गुरु बलवद्वेदितव्यं व्य
वहारिणां व्यवहारविधौ व्यवहारनिर्णये कार्ये । उत्तरोत्तरनिर्णीतो व्यवहारः कुदृष्टबुद्ध्याऽर्थिप्रत्यर्थिनोरन्यतरस्यापरितो
षेण नृपाधिकृतपर्यन्तं सम्प्रवर्तते । न तु पूर्वकृत उत्तरेणेतरनिकर इत्यर्थः । नारदेन पुनर्नृपाधिकृतनिर्णीतेऽन्यपरसभ्येऽप्य
वर्तनं इत्युक्तम् । कुलानि श्रेणयश्चैव गणाश्चाधिकृतो नृपः । प्रतिष्ठा व्यवहाराणां पूर्वेषामुत्तरोत्तरमिति । अत्र नृपपर्यन्तगणस्याधि
कारोपलक्षणं नृपाधिकृतापेक्षया तस्याधिकत्वात् । तथा च नृपाधिकृतः प्राड्विवाकः सविधे नृपः सविधेऽपरावर्तनमि
त्यर्थः । तत्र नृपगमने सोत्तरः सभ्यैः सज्ञापूर्वैः सह सम्यग्व्यवहारे निर्णीयमाने यदि कुदृष्टवादी पराजितस्तदा द्विगुणं स
सोऽदण्ड्यः । यदि जयति तदा पूर्वसभ्या दण्ड्या यथाशास्त्रं वक्ष्यन्ते । ननु पूगादीनां व्यवहारद्रष्टृत्वमेवासम्भावि । कुतस्तेषां
बलाबलम् । तथा हि राजनियोगेन वा व्यवहारद्रष्टृत्वं तेषां स्यात्स्वयं वा । नाद्यः सहायत्वेन प्रतिनिधित्वेन प्राड्विवाकस्य पुरो
हितामात्यसभ्यानां च सहायत्वेनैव नियोगविधानात् । न द्वितीयः प्रजापालनाधिकृतानामेव व्यवहारदर्शनाधिकारस्यैव नान्ये
षां स्वातन्त्र्यासम्भवात् । अत्र पूर्वोपन्यस्तैर्वणिक्शिल्पप्रभृतीन्वण्यादिभिर्व्यासबृहस्पत्यादिवचनैः पूर्वोपन्यस्तैर्व्यवहारद्रष्टृ
त्वेन नियोगावगमात् वणिगादिव्यवहारद्रष्टृत्वं पूगादीनां राजनियोगेनैव विनिमन्तव्यम् । तथा सति राजप्राड्विवाकाभिज्ञानां
तन्नैरपेक्ष्येण द्रष्टृत्वाभावात् सर्वव्यवहारद्रष्टृत्वं प्राधान्येन व्यपदेशाभावं नीतिन्यायेन तयोरेवेति कुलादिद्रष्टृत्वे व्यवहारः प्रा
मौ तद्ध्यनुपपन्नं द्रष्टृत्वाभावात् । शूद्रं यत्नेन वर्जयेदिति निषेधात्पूगादीनां च प्रायः शूद्रत्वात् धर्मप्रतिज्ञा सत्कृत्य प्रति

निधिनयापि केवलानां तद्दृष्टत्वाभावादिति । अत्रोच्यते । मास्तु तेषां व्यवहारदर्शने कैवल्येन तथापि वणिगादिव्यवहारे तेषाम
भियोगाद्राजादीनामपि तत्र तत्प्रत्ययेन निर्णायकत्वात्तत्कृतप्राधान्यमादाय तत्कृतत्वव्यपदेशसम्भवात् दृष्टबुध्यापराधृष्यपुन
र्व्यवहारप्रवर्त्तनाय बलाबलं तेषामनेन वचनेनोच्यतेऽन्यथास्य वचनस्य निर्विषयतापत्तेः । वस्तुतस्तु । अदृष्टयत्नेन तवर्थार्द
व्यनेन प्रतिषिद्धप्रतिनिधिभावानामपि पूगादीनां पूगादिव्यवहारे प्रतिप्रसवः । प्रतिनिधिभावस्य व्यासादिवचनैरभियोगावि
शेषान्न क्रियत इति । प्राड्विवाकवाक्यैवल्यमपि वक्तुं शक्यत इति न किंचिदनुपपन्नम् । बृहस्पतिस्त्वमुमेवार्थं स्फुटयति । तथाचा
ह । राज्ञा ये विदिताः सम्यक् कुलश्रेणिगणादयः । साहसन्यायवर्ज्जानि कुर्युः कार्य्याणि ते नृणाम् ॥ कुलश्रेणिगणाध्यक्षाः प्रो
क्ता निर्णयकारिणः । येषामपि निश्चितस्य प्रतिष्ठानूत्तरो नराः ॥ विचार्य्य श्रेणिभिः कार्यं कुलैर्यन्न विचारितम् । गणैश्च श्रेण्यविख्या
तं गणाज्ञानन्नियुक्तकैः ॥ कुलादिभ्योऽधिकाः सभ्यास्तेभ्योऽध्यक्षोऽधिकः कृतः । सर्वेषामधिको राजा धर्म्यं यत्तेन निश्चितम् ॥
उत्तमाधममध्यानां विवादानां विचारणात् । उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धय इति ॥ कुलादिपदार्थो व्याख्यातः गणश्च
श्च पूगपर्य्यायः । आदिपदेन सभ्यादिग्रहणम् । नियुक्तकाः सभ्याः । साहसाख्यं व्यवहारपदम् । युक्तिश्चात्रेयम् । कुलादी
नां ज्ञात्यादिरूपाणां दाक्षिण्यादिनान्यथा दर्शनमपि सम्भाव्यत इति कुदृष्टचोद्भावकवचनेन राजादीनामसंवः श्रेणीनामुदासी
नतया ततो बलवत्ता । पूगानान्त्वेकस्थाननिवासमात्रसम्बन्धेपि भिन्नजातितया भिन्नवृत्तितया च ततोपि मिथो नपेक्षत्वादौदास्याद्
बलवत्त्वम् । नृपाधिकृतानान्तु ततोपि निःसम्बन्धतया राज्ञा परीक्ष्याधिकृतानां राजभयादपि पक्षपातदाक्षिण्याद्यसम्भव इति
पूगेभ्यो बलवत्तरत्वम्प्राड्विवाकस्य पुरोहितामात्यानाञ्च सुतरां प्रागुक्तहेतुद्वयादाधिक्यम् । नृपस्य साक्षादेव नृपाणां प्रजापालना
धिकाराद्विपक्षपातकीभूतदोषाधिक्यादन्यायं कुरुते यदि पतिः कस्तं निरोद्धुं क्षम इति न्याये प्रजाप्रक्षोभादिदृष्टस्पष्टदोषभया
दवश्यमपक्षपातता सम्भवतीति सर्वेतो बलवत्तरत्वम् । बुद्धितारतम्यमपि बृहस्पतिवचने स्पष्टमिति ॥ ॥ अथ केषांचित्तु

||वी० मि०||

|| व्य० ||

|| १३ ||

अथ भिन्नानामपि सभावस्थानं निरूप्यते ॥ कात्यायनः ॥ कुलशीलवयोवृत्तवित्तवद्भिरमत्सरैः । वणिग्भिः स्यात्कतिपयैः कुलभू-
तैरधिष्ठितम् । अधिष्ठितं सद इति प्रक्रमात् । कुलभूतैर्वृद्धैरित्यर्थः । तेषामुपयोगश्चोक्तस्तेनैव । श्रोतारो वणिजस्तत्र कर्त-
व्या दर्शिता इति । गणकलेखकसाध्यपालाख्यराजपुरुषाणामपि सभावस्थानमाह । कार्यकथनमुखेन बृहस्पतिः । नृपोऽधि-
कृतसभ्याश्च स्मृतिर्गणकलेखकौ । हेमाग्न्यम्बुस्वपुरुषाः साधनाङ्गानि वै दश । एतद्दशाङ्गकरणं यस्यामध्यास्य पार्थिवः । न्या-
यान्पश्येत्कृतमतिः सा सभाध्वरसंमिता । दशानामपि चैतेषां कर्म प्रोक्तं पृथक्पृथक् । वक्ताध्यक्षो नृपः शास्ता सभ्याः कार्यपरी-
क्षकाः ॥ स्मृतिर्विनिर्णयं ब्रूते जयदानं दमं तथा । शपथार्थे हिरण्याग्नी अम्बु तृषितक्षुब्धयोः । गणको गणयेदर्थं लिखेन्न्यायं च
लेखकः । प्रत्यर्थिसभ्यानयनं साक्षिणां च स्वपूरुषः । कुर्यादधमर्णरक्षेदर्थिप्रत्यर्थिनौ सदा । एषां मूर्धा नृपोऽङ्गानां मुखं
चाधिकृतः स्मृतः । बाहू सभ्याः स्मृतिर्हस्तौ जङ्घे गणकलेखकौ । हेमाग्न्यम्बु दृशौ हृत्त्वपादौ स्वपुरुषस्तथेति । अत्राधिकृतश-
ब्देन प्राड्विवाको गृह्यते । एतादृशाङ्गकं सभारूपं शरीरं दशाङ्गमित्यर्थः । यस्यां सभायां शरीरं तु अध्यास्य पार्थिवः एवमद्-
ध्यास्याधिष्ठानं कृत्वा । अनेन क्षेत्रज्ञः शरीरमिव साङ्गां सभां समधिष्ठाय अन्तर्यामिवत्सर्वचरितानि पश्यंस्तदनुरूपसदसत्फल-
भोक्ता दाता च भवतीति सूचितम् । स्वपुरुषलक्षणं बृहस्पतिरेवाह । आकारयेद्रक्षेच्च साक्ष्यर्थिप्रतिवादिनाम् । सभ्याधी-
नः सत्यवादी कर्तव्यस्तु स्वपूरुषः । अयं च साध्यपालनामा शूद्र एव । तथा च व्यासः । साध्यपालस्तु कर्तव्योऽशठः साध्यसा-
धकः । क्रमायातो दृढः शूद्रः सभ्यानां च मते स्थित इति । गणकलेखकौ च द्विगुणायुतौ कर्तव्याविव्याह बृहस्पतिरेव । शब्दाभिधानत-
त्त्वज्ञौ गणनाकुशलौ शुची । नानालिपिज्ञौ कर्तव्यौ राज्ञा गणकलेखकौ । व्यासोऽपि । त्रिस्कन्धज्योतिषाभिज्ञं स्फुटं प्रत्ययकारकम्
। श्रुताध्ययनसम्पन्नं गणकं धारयेन्नृपः । स्फुटवर्णमयुक्तं च शब्दलाक्षणिकं शुचिम् । स्फुटाक्षरं जितक्रोधमलुब्धं सत्यवादि-
नम् । त्रिस्कन्धज्योतिषाभिज्ञं संहितार्थाभेदयुक्तं च कल्ये । निःशास्त्रं तद्वेदिनम् । श्रुताध्ययनसम्पन्नमित्युक्तोऽत्र लेखको द्विजातिसत्तमः

रुदाहृतमित्यस्याप्ययमर्थः। पुरराष्ट्रविरुद्धोयत्रनगरेराष्ट्रेचयाव्यवस्थाप्रसन्नीतद्विरोधापादकोव्यवहारोनादेयः। पौर
जानपदक्षोभापादकत्वात्। केनचिन्निमित्तेनप्राचीनोपिराज्ञास्वराष्ट्रेप्रतिषिद्धःसोपिराज्ञास्वराष्ट्रेप्रतिषिद्धःसोपिराजाज्ञाभं
गप्रसङ्गान्नाङ्गीकर्तव्यइति। यत्तुस्मरन्ति। गुरोःशिष्येपितुःपुत्रेदम्पत्योःस्वामिभृत्ययोः। विरोधेतुमिथस्तेषांव्यवहारोनसिद्ध्य
तीति। ननुगुरुशिष्यादीनामन्योन्यमात्यंतिकव्यवहारानुपादानपरत्वंभवति। तेषामपिधनिकाधमर्णत्वादिनाव्यवहारनि
वृत्तेरप्रत्यूहत्वात्। नचगुरुत्वशिष्यत्वपितृपुत्रत्वादिप्रयुक्तव्यवहारानादेयतापरमिदमितिवाच्यम्। तादृशस्याप्यनादेय
त्वेनिर्णयाभावप्रसङ्गेनयुक्तिविरोधात्। नचाप्रसक्तस्यानुवादमात्रमनादेयत्वाभिधानमितियुक्तम्। प्रसक्तेरुक्तत्वात्। तथाहि।
भार्य्यापुत्रश्चदासश्चशिष्योभ्राताचसोदरः। प्राप्तापराधास्ताड्याःस्युरज्ज्वावेणुदलेनवा॥ पृष्ठतस्तुशरीरस्यनोत्तमाङ्गेक
थञ्चन। अतोन्यथातुप्रहरन्प्राप्तस्याच्चौरकिल्बिषम्। शिष्यशिष्टिरवधेनाशक्तौवेणुविदलाभ्यांतनुभ्यामन्येनघ्नन्राज्ञाशा
स्यइत्यादिभिर्मनुगौतमादिवचनैःशिष्यस्यशासनप्रकारविशेषनियतमादानादिक्रमेणगुरुर्य्यदिमहतादण्डेनोत्तमाङ्गेशि
ष्यंकोपावेशवशात्ताडयतितदास्मृत्याचारव्यपेतमार्गेणगुरुणाधर्षितः। शिष्योवैयात्याद्धर्माधिकरणम्प्रविशतिचेत्तद्दण्डपा
रुष्यरूपंव्यवहारपदत्वंभवतीतिवक्तुमनर्हम्। तथादायभागप्रकरणेवक्ष्यमाणभूर्य्यापितामहोपात्तेत्यादिवचनात्पिताम
होपार्जितभूम्यादौपितापुत्रयोःस्वाम्यसाम्येयदिपितामहेविषमविभागादिचिकीर्षति। तदापितापुत्रयोर्दायभागाख्यविवा
दपदमादायव्यवहारःप्रसज्यमानोनापह्नोतुंशक्यःतथा। दुर्भिक्षेधर्मकार्य्येचव्याधौसम्प्रतिरोधके। गृहीतंस्त्रीधनंभर्त्ताना
कामोदातुमर्हतीतिवचनात्। दुर्भिक्षादिनिमित्तंविनैवयदिस्त्रीधनम्भर्त्तागृहीत्वाव्ययीकरोति। तयाचयाच्यमानोविद्यमान
धनोपिशपान्नप्रत्यर्पयति। तदस्त्रीदानपदमादायजायापत्योरपिव्यवहारप्रवृत्तिःकेननिरोद्धुंशक्या। एवंस्त्रीपुन्धर्माख्यवि
वादपदोपादानेनतुतयोरेवव्यवहारआवश्यकः। तस्मादनन्यविषयत्वात्दृष्टादृष्टव्यवहारपदान्तर्गतानामन्वादिस्मृतिषु

न्मत्तप्रलपितमेव स्यात्। स्वामिभृत्ययोस्तु व्यवहारो वेतनादाननिरूपणे वक्ष्यते। गर्भदासादीनधिकृत्य च। यश्चैषां स्वामिनं
कश्चिन्मोचयेत्प्राणसंशयात्। दासत्वात्स विमुच्येत पुत्रभागं लभेत चेति॥ नारदोक्तेस्तादृशानां नैषां न्याय्याद्दासत्वान्मोचने पुत्रभा-
गादाने च स्वामिना सह विवादो दुर्वारः। तस्मादिदं वचनं गुर्वादिभिः सह शिष्यादीनां व्यवहारकरणे लोकद्वयेन श्रेयद् इ
निन्दावहत्वादमुत्र नरकजनकत्वादित्येतत्परमेव। राजादिभिस्तु नायमुचितो व्यवहारो लोकद्वयहानिकारणादिति निवार्य-
माणा अपि शिष्यादयो न परितुष्यन्ति चेत्तदा तेषां यथाशास्त्रं निर्णयकरणमदोष एव। गुर्वादिभिः सह व्यवहारः शिष्यादी-
नामनादेयो राज्ञेत्यभिधानात्तु त्वाद्यनिवारणपरं दृष्टादृष्टदोषद इति ध्येयम्। गुरुशिष्यौ पितापुत्रौ दम्पती स्वामिभृत्यकौ। ए-
तेषां समवेतानां व्यवहारो न विद्यते॥ इति मदनरत्नधृतबृहस्पतिवचनमप्येतदभिप्रायकमेव। मदनरत्नकल्पतरुरत्नाक-
रेषु तु राज्ञा यथाकथञ्चिदर्थमाकलय्य विवादोपशमं कुर्यान्न तु प्रतितरलेखकपूर्वकं विचारं कुर्यादिति व्याख्यातं तदसत्। कथं-
चिदर्थानाकलने च तुष्याद्व्यवहारप्रवर्त्तनस्यावश्यकत्वात्। पूर्वप्रदर्शिततात्पर्यवर्णनमन्तरा गत्यभावात्। एकस्य बहुभिः सा-
र्धं स्त्रीणां प्रेष्यजनस्य च। अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः। इति नारदवचनम्। तस्यापि भिन्नार्थैरनेकैरेकस्य युग-
पद्व्यवहारो नादेय इत्यर्थः। गवाद्यर्थं हरेद्यस्तु सर्वविदं लङ्घयेच्च यः। एकघ्नानां बहूनां चेत्यादिस्मरणाद्व्यवहारिण एकस्य
बहुभिस्ताडितस्य वा गणेन ताडयितृभिश्च सर्वैः कार्ये युगपदपि व्यवहारस्य युक्तत्वात्। भिन्नार्थैरपि क्रमेणापि व्यवहारादर्शनेन
तत्तदर्थानिर्णयप्रसंगात्। प्रतिज्ञादोषा अपि वक्ष्यमाणास्तादृग्व्यवहारमादेयत्व एव पर्यवस्यन्ति॥ ●॥ अथ सदृष्टकसभाप-
तेः कार्यं निरूप्यते। तत्रावेदयितुः प्रश्नप्रकारमाह। कात्यायनः। काले कार्यार्थिनं पृच्छेत्प्रणतं पुरतः स्थितम्। किंका-
र्यं का च ते पीडा मा भैषीर्ब्रूहि मानव॥ केन कस्मिन्कदा कस्मात्पृच्छेदेवं सभागतम्। एवं पृष्टः कार्यं यथावेदयेत्तत्प्रकारमाह
। याज्ञवल्क्यः। स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः। आवेदयति चेद्राज्ञे व्यवहारपदं हि तदिति॥ चेदित्यनेन यदि केन

चिन्निमित्तेनसमावेदयेत्र्यर्हिनबलाद्वादयेदित्युक्तम्। तथाचमनुः। नोत्पादयेत्स्वयङ्कार्य्यंराजानाप्यस्यपूरुषः इति। पिता
महोपि। नतुपश्येत्समुत्प्रेक्ष्यस्वयंवापुरुषेणवेति। नारदोपि। नतुराजावशित्वेनधनलोभेनवापुनः। उत्पादयेत्कार्य्याणि
मनुजानामविवादिनाम्॥ तयोत्पन्नमपिकार्य्यंकार्यिणानत्स्वभिमावाऽनिवेदितङ्कयञ्चिद्वगम्यापिनराजादिभिर्बलाद्गाह
नीयमित्यप्याहमनुः। नचप्रापितमन्येनग्रसेदर्थङ्कयञ्चनेति। अन्येनासम्बद्धेनकथञ्चनरागलोभादिना। अर्थंकार्य्यंय
सेत्स्ववशंकुर्य्यात्। अतएवपितामहः। नरागेणनलोभेननक्रोधेनग्रसेन्नृपः। परैरप्रापितानर्थान्नचापिस्वमनीषयेति। परैः
कार्य्यितत्समृद्धैःकार्य्येसम्बन्धाःपुत्रभ्रात्रादयः। योनभ्राताननपितानपुत्रोननियोगकृत्। परार्थवादीदण्ड्यःस्याद्व्यवहारेषु
विब्रुवन्॥ इतिनारदवचनात्। अर्थिनासंनियुक्तोवाप्रत्यर्थिप्रहितोपिवा। योयस्यार्थेविवदतेतयोर्जयपराजयौ। इतिका
त्यायनवचनाच्च। पितामहोमुमर्थंस्पष्टमाह। पितामातासुहृद्वापिबन्धुःसम्बन्धिनोपिवा। यदिकुर्य्युरुपस्थानंवादंतत्रप्रव
र्तयेदिति॥ यःकश्चित्कारयेत्किञ्चिन्नियोगाद्येनकेनचित्। तत्तेनैवकृतंज्ञेयमनिवर्त्यंहितत्स्मृतमिति॥ अनिवेदितामादा
नापवादमाहसएव। छलानिचापराधांश्चपदानिनृपतेस्तथा। स्वयमेतानिगृह्णीयान्नृपस्त्वावेदकैर्विनेति। छलान्याहसए
व। पथिभङ्गीपराक्षेपीप्राकारोपरिलङ्घकः। निपानस्यविनाशीचतथाचायतनस्यच। परिखापूरकश्चैवराजच्छिद्रप्रकाशकः
। अन्तःपुरंवासगृहंभाण्डागारंमहानसम्। प्रविशत्यनियुक्तोयोभोजनञ्चनिरीक्षते। विण्मूत्रश्लेष्मवातानांक्षेप्ताकामान्नृपा
ग्रतः। पर्य्यङ्कासनबन्धीचाप्यग्रस्थाननिरोधकः। राज्ञोतिरिक्तवेषश्चविधृतःप्रविशेत्तुयः। यश्चापद्वारेणविशेद्वेलायामन्त
थैवच। शय्यासनेपादुकेचशयनासनरोहणे। राजन्यासन्नशयनेयस्तिष्ठतिसमीपतः। राज्ञोविद्विष्टसेवीचाप्यदत्तविहिता
सनः। वस्त्राभरणयोश्चैवसुवर्णपरिधायकः। स्वयंग्राहेणताम्बूलंगृहीत्वाभक्षयेत्तुयः। अनियुक्तःप्रभाषीचनृपस्याक्रोशकस्त
एवच। एकवासास्तथाभ्यक्तोमुक्तकेशोवगुण्ठितः। विचित्रिताङ्गःस्रग्वीचपरीधानविधूनकः। शिरःप्रच्छादकश्चैवच्छिद्रान्वे

च्छ इति माधवीयपाठः । विनीतवेषो विवदेदिति नात्यपेयम् । यदावेदकवचनं लेखकः फलकादिषु राजाज्ञया लिखेदित्याह नारदः । रागादिना यदेकेन कोपितः करणे वदेत् । तदोमिति लिखेत्पूर्वं लेखकः फलकादिष्विति । करणे धर्माधिकरणे । ओमित्यनेन यथावेदितं तत्तथैव लिखेदित्युक्तम् । लिखनानन्तरकृत्यमाह । कात्यायनः । एवं पृष्टः स यद्ब्रूयात्तत्सभ्यैर्ब्राह्मणैः सह । विचार्य कार्य्यं न्याय्यं चेदाह्वानार्थमतः परम् । मुद्रां वा निक्षिपेत्तस्मिन् पुरुषं वा समादिशेदिति । न्याय्यं न्यायादनपेतं मया जन्मान्तरे सोढव्यं मृष्यं यन्न प्रत्यर्पयतीति इत्यादिवद्व्यवहारायोग्यं यन्न भवतीत्यर्थः । तस्मिन्नावेदके पुरुषं साध्यपालनामानम् । आह्वानार्थमभियुक्तस्येत्यर्थात् । तथा च बृहस्पतिः । यस्याभियोगं कुरुते तत्त्वेनाशङ्कयाथवा । तमेवाह्वानयेद्राजा मुद्रया पुरुषेण वा ॥ उत्तरदाने तस्यैवाधिकारादिति भावः । कात्यायनः । अधिकारोऽभियुक्तस्य नेतरस्यास्य सङ्गतेरिति । इतरस्याभियुक्तादेकार्थेभिन्नस्य । असंगतेरसम्बन्धात् । अभियुक्तानामपि केषाञ्चिदनाह्वानमाह । स एव । अकल्यबालस्थविरविषमस्थक्रियाकुलान् ॥ कार्य्यातिपातिव्यसनीनृपकार्योत्सवाकुलान् । मत्तोन्मत्तप्रमत्तार्त्तभृत्यान्नाह्वानयेन्नृपः । अकल्पो व्याधितः । विषमस्थः सङ्कटापन्नः । क्रियाकुलो नित्यनैमित्तिककर्म्मकरणव्यग्रः । कार्य्यातिपाती । यस्य तदानीमागच्छतो गुरुतरकार्य्यहानिः । व्यसनी । इष्टवियोगादिजन्यशोकवान् । मत्तो मदनीयसेवनेन च्युतमतिः । उन्मत्तो ग्रहाद्याविष्टः । प्रमत्तस्तदानीं सर्वथानवधानवान् । आर्त्तो विषादवान् । भृत्यग्रहणमस्वतन्त्रोपलक्षणम् । अत एव न हीनपक्षां युवतिं कुले जातां प्रसूतिकाम् । सर्ववर्णोत्तमां कन्यां ता ज्ञातिप्रभुकाः स्मृता । इत्यत्रास्वतन्त्रस्त्रीणामाह्वानम्प्रतिषिद्धं स्वतन्त्राणान्तासामाह्वानमाह । स एव । तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः । निष्कुला याश्च पतितास्तासामाह्वानमिष्यत इति । नारदः । निर्वेष्टुकामो रोगार्त्तो यियक्षुर्व्यसने स्थितः । अभियुक्तस्तथान्येन राजकार्य्योद्यतस्तथा । गवां प्रचारे गोपालाः सस्यावापे कृषीवलाः । शिल्पिनश्चापि तत्कालं आयुधीयाश्च विग्रहे । अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती विष

मस्याश्चनासाध्यानचैतानाह्वयेन्नृप इति । निर्वेष्टुकामो विवाहेच्छुन्मुखः । एते चाकालानर्हा आह्वानस्य । यदा तु तत्काला
ह्वानमावश्यकं तदा पुत्रादिर्यत्प्रतिनिधयः । इदमाह बृहस्पतिः । अप्रगल्भजडोन्मत्तवृद्धस्त्रीबालरोगिणाम् । पूर्वोत्तरं व
देद्बन्धुर्नियुक्तोऽथवा नरः । बन्धुः पुत्रादिस्तस्य परार्थवादित्वाभावात् । नियुक्तस्य तत्त्वादेव । प्रतिनिध्याह्वानेन यदि नाति
षां हः कालातिपातासहत्वं यत्र च प्रतिनिधिकरणप्रतिषेधस्तत्र यथाकथञ्चिदकल्याद्याह्वानमाह स एव । कालं देशं च
विज्ञाय कार्याणां च बलाबलम् । अकल्यादीनपि शनैर्यानैराह्वापयेन्नृपः । ज्ञात्वाभियोगं येऽपि स्युर्वने प्रव्रजितादयः । तानप्या
ह्वापयेद्राजा गुरुकार्य्येष्वकोपयन् । गुरुकार्येष्वाह्वापयेदिति सम्बन्धः । निमित्तसप्तमी चेयम् । गुरुकार्यनिमित्तमाह्वा
पयेदित्यर्थः । अकोपयन् सान्त्वयन् । प्रतिनिधिप्रतिषेधं क्वचिदाह कात्यायनः । ब्रह्महत्यासुरापानस्तेयगुर्वङ्गनागमे । अ
न्येषु चातिपापेषु प्रतिवादी न दीयते ॥ मनुष्यमारणे स्तेये परदाराभिमर्शने । अभक्ष्यभक्षणे चैव कन्याहरणदूषणे ॥ पा
रुष्ये कूटकरणे नृपद्रोहे तथैव च । प्रतिवादी न दातव्यः कर्त्तापि विवदेत्स्वयमिति ॥ पुनस्तेयग्रहणं सुवर्णस्तेये प्रतिनिधि
प्रतिषेधार्थमिति मदनरत्नाकरः । पूर्वं स्तेयग्रहणं ब्रह्महत्यादिसंदंशात्सुवर्णस्तेयपरमिति नियमः । प्रतिवादी वादिप्र
तिवादिनोः प्रतिनिधिरीदृशेषु गुरुकार्येषु न ग्राह्य इत्यर्थः । राजाह्वानमतिक्रामतो दण्डो बृहस्पतिनोक्तः । आहूतो यस्तु ना
गच्छेद्दर्पाद्बन्धुबलान्वितः । अभियोगानुरूपेण तस्य दण्डं प्रकल्पयेत् ॥ अभियोगभेदेन दण्डभेदस्तु कात्यायनेनोक्तः ।
आहूतस्त्ववमन्येत यः शक्तो राजशासनात् । तस्य कुर्यान्नृपो दण्डं विधिदृष्टेन कर्मणा ॥ हीनेकर्मणि पञ्चाशन्मध्यमे तु शताव
रः । गुरुकार्येषु दण्डः स्यान्नित्यं पञ्चशतावरः । गुरुकार्येषु नित्यमाशङ्कितविशेषणादापन्नानागमने दण्डो नास्तीति का
यितम् । व्यासेन तु स्पष्टमुक्तम् । पत्नीकहत्वे देशदुर्भिक्षव्याधिपीडिते । कुर्वीत न पुनराह्वानदण्डेन परिकल्पयेत् । आपन्ना
नामनागमनासम्भवहेतुभूतं विवक्षितम् । आवेदनाय जिगमिषतोऽकृतावेदनेन वा कार्य्यान्तरवैयग्र्यादिना राजाह्वानविषयं

वेराजशपथादिनाप्रतिवादिनःप्रतिरोधश्चासेधापरपर्य्यायःकार्यइत्याह कात्यायनः । उत्पादयतियोहिंसान्देयम्वानप्र
यच्छति । याच्यमानायदौःशील्यादाकृष्योसौन्नृपाज्ञया ॥ आवेद्यतुनृपेकार्य्यमसन्दिग्धेप्रतिश्रुते । तदासेधंप्रयुञ्जीतया
वदाह्वानदर्शनमिति । प्रतिश्रुतेविचार्यत्वेननिश्चितेप्रतिज्ञातेच । नारदोपि । वक्तव्येऽर्थेनतिष्ठन्तमुत्क्रामन्तञ्चतद्वचः ।
आसेधयेद्विवादार्थीयावदाह्वानदर्शनमिति । वक्तव्येनिर्णीतव्ये । आसेधस्यचातुर्विध्यमाहसएव । स्थानासेधःकालकृतःप्र
वासात्कर्मणस्तथा । चतुर्विधःस्यादासेधोनासिद्धस्तंविलंघयेत् ॥ स्थानासेधोयावन्निर्णयमस्मात्स्थानात्पदमपिनचलित
व्यमित्यादिरूपः । कालासेधःएतावन्तंकालङ्कार्यान्तरंनकरणीयमनिर्णीयामुंव्यवहारमितीदृशः । निर्णयावधिविदेशग
मनन्नकार्यन्त्वयेत्येवंविधःप्रवासासेधः । देशकालावधिरहितोनिर्णयमात्रावधिकःस्नानादिकर्मनिरोधःकर्मासेधःक्वचिदासे
धनिषेधस्तेनैवोक्तः । नदीसन्तारकान्तारदुर्देशोपप्लवादिषु । आसिद्धस्तम्परासेधमुत्क्रामन्नापराध्नुयात् । आसिद्धस्याप
राधाभावमुखेननिषेधउक्तः । दुर्देशेतिमाधवीयपाठोदुर्देशाद्दुरवस्थेतितत्त्वार्थः । अतएवासेधामर्हासेधएवप्रत्युतदण्डउ
क्तः । कात्यायनेन । आसेधयंस्तुनासेध्यंराज्ञाशास्यइतिस्थितिरितिनारदोपि । यस्त्विन्द्रियनिरोधेनव्याहारोच्छ्वासनादि
भिः । आसेधयदनासेधैःसदण्ड्योनत्वतिक्रमम् । सएव । आसेधकालआसिद्धआसेधंयोतिवर्त्तते । सविनेयोन्यथाकुर्वन्नासे
द्धादण्डभाग्भवेत् । कात्यायनः । आसेधयोग्यआसिद्धउत्क्रामन्दण्डमर्हति । अनासेध्याउक्तास्तेनैव । वृक्षपर्वतमारूढा
हस्त्यश्वरथनौस्थिताः । विषमस्थाश्चतेसर्वेनासेध्याःकार्यसाधकैः । व्याध्यार्त्ताव्यसनस्थाश्चयजमानास्तथैवचेति । निर्वे
ष्टुकामइत्याद्याह्वाननिषेधप्रसंगेनासेधकर्मपिनारदवचनप्रागलेखि । बृहस्पतिरपि । शास्त्रोद्वाहोद्यतोरोगीशोकार्त्तो
न्मत्तबालकाः । मत्तोवृद्धोभियुक्तश्चनृपकार्योद्यतोव्रती । आसन्नेसैनिकःसंख्येकर्षकोवापसंग्रहे । विषमस्थाश्चनासेध्याःस्त्री
सनाथास्तथैवचेति । संख्येयुद्धे । वापसङ्ग्रहइत्येकवद्भावोद्वंद्वे । तथाचबीजवापेतत्संग्रहेचेत्यर्थः । स्त्रियःसनाथाश्चेत्ययमपि

ज्ञापकानुसरणमन्यथाप्रसङ्गादित्ययुक्तम् । केचित्प्रतिभुवो न ग्राह्या इत्याह । कात्यायनः । न स्वामी न च वै शत्रुः स्वामिनाधि
कृतस्तथा । निरुद्धो दण्डितश्चैव संशयस्थो न कुत्रचित् । नैव रिक्थी न रिक्तश्च न चैवात्यन्तवासिनः । राजकार्यनियुक्ताश्च
ये च वै प्रव्रजिता नराः । नाशक्तो धनिने दातुं दण्डं राज्ञे च तत्समम् । नाविज्ञातो ग्रहीतव्यः प्रतिभूः स्वक्रियां प्रति । रिक्थी भ्रात्रादिः
। रिक्तो निर्धनः । अत्यन्तवासिनो नैष्ठिकब्रह्मचारिण इति मिताक्षरादिषु । अन्यत्रवासिन इति पठित्वा देशान्तरवासिन इ
ति मदनरत्ने व्याख्यातम् । अविज्ञातो विशेषतोऽपरिचितः । याज्ञवल्क्यः । भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि । प्राति
भाव्यमृणं साक्ष्यमविभक्तेन तु स्मृतम् । नारदः । साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च । विभक्ता भ्रातरः कुर्युर्नाविभक्ताः
परस्परम् । इदमपि दृष्टार्थम् । तथा प्रतिभूभेदास्तत्कार्यं चर्णादानप्रस्तावे वक्ष्यते । प्रतिभुवो यद्युभयोरर्थिप्रत्यर्थिनोर
न्यतरस्य तदा किं कार्यमित्यपेक्षित आह कात्यायनः । अथ चेत्प्रतिभूर्नास्ति कार्ययोग्यस्तु वादिनः । स रक्षितो दिनस्यान्ते दद्याद्भृ
त्याय वेतनम् । भृत्याय रक्षकाय साध्यपालाख्याय । अत्रैकत्वमविवक्षितम् । वादिन इत्युपलक्षणं प्रतिवादि
नोऽपि ॥ ● ॥ अथ व्यवहारपादाः प्रतिज्ञादयः प्रस्तूयन्ते । ते चत्वारः । परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु । वाक्यान्न्याय्य
व्यवस्थानं व्यवहार उदाहृतः ॥ भाषोत्तरक्रियासाध्यसिद्धिभिः क्रमवृत्तिभिः । आक्षिप्तचतुरंशस्तु चतुष्पादभिधीयत इति
वचनात् बृहस्पतिः । भाषापादोत्तरपादौ क्रियापादस्तथैव च । प्रत्याकलितपादश्च व्यवहारश्चतुष्पद इति । कात्यायनो
ऽपि । पूर्वपक्षश्चोत्तरपक्षश्च प्रत्याकलितमेव च । क्रियापादश्च तेनायं चतुष्पात्समुदाहृतः ॥ बृहस्पतिः । मिथ्यायां च चतुरः पादाः प्रत्य
वस्कन्दने तथा । प्राङ्न्याये च स तु ज्ञेयो द्विपात्सम्प्रतिपत्तिषु । तृतीयतुरीयपादयोः सम्प्रतिपत्तावसम्भवात् द्विपात्त्वमिति । अत्र
विज्ञानयोगिना । साध्यसिद्धिस्तत्सिद्धौ सिद्धिमाप्नोति । विपरीतमतोऽन्यथेति योगीश्वरोक्तेऽयं पक्षः तथावधारणान्तलब्धश्च
तुर्थपादः इत्यभिधायोत्तराभिधानानन्तरमर्थिप्रत्यर्थिनोः कस्य क्रियेत्यादिपरामर्शलक्षणस्य प्रत्याकलितस्य योगीश्वरेणा

रमासपक्षतिथिवारार्थिप्रत्यर्थिनामतदीयजातिभिरादिशब्दोपात्तैश्चद्रव्यसंख्यानजातिस्वरूपगृहादिस्थानवेलाक्षमालिंगा
दिभिर्ययोपयोगश्चिह्नितमितिकार्यमात्रमावेदनकालेलिखितमधुनोपयुक्तविशेषणसहितंलिख्यतइतिनानर्थक्यमितिभावः।
आदिशब्दग्राह्याणिचकात्यायनआह। निवेश्यकालंवर्षंचमासम्पक्षन्तिथिन्तथा। वेलाम्प्रदेशंविषयंस्थानंजात्याकृतीवयः
।साध्यम्प्रमाणंद्रव्यञ्चसंख्यांनामतथात्मनः। राज्ञांचक्रमशोनामनिवासंसाध्यनामच। क्रमात्पितृणांनामानिपीडामाहर्तृदा
यकौ। क्षमालिङ्गानिचान्यानिपक्षंसङ्कल्प्यकीर्तयेत्। कालोधनप्रयोगादिकालः। वर्षं पत्रलिखनकालीनंमासपक्षतिथयोवि
संध्यावन्दनादिक्रियोपलक्षितःकालोवेला। प्रदेशःक्षेत्रादिस्थलविशेषः। विषयोऽन्तर्वेद्यादिदेशः। स्थानंविवादास्पदीभूत
गृहादिग्रामादि। आकृतिरवयवसंस्थानविशेषः। वयस्तारुण्यादि। प्रमाणंनिवर्तनप्रस्थादि। आत्मनोराज्ञांचक्षेत्रादिभो
गकालीनाम्नउच्चवचनत्वदीयपित्रादिप्राप्त्यर्थं। निवासोनिकटगृहादिः। पितरोऽर्थिप्रत्यर्थिनोस्त्रियः। पीडाप्रतिभूप्रभृतीनाम्
निकादिकृता। आहर्ताप्रतिग्रहादिविषयवस्तुनिश्चायनेना। दायकोदातृविक्रेतादिः। क्षमालिङ्गान्यात्मीयधनादेः। परोपभो
गाद्युपसंधसहनचिह्नानि ॥ ७ ॥ अन्यस्तु बोधंसंग्रहकारोपि। अर्थवद्धर्मसंयुक्तंपरिपूर्णमनाकुलम्। साध्यवद्वाचकपदम्प्र
कृतार्थानुबन्धिच॥ प्रसिद्धमविरुद्धञ्चनिश्चितंसाधनक्षमम्। संक्षिप्तन्निखिलार्थंचदेशकालाविरोधिच। वर्षर्तुमासपक्षाहो
वेलादेशप्रदेशवत्। स्थानावसथसाध्याख्याजात्याकारवयोयुतम्। साध्यप्रमाणसंख्यावदात्मप्रत्यर्थिनामच। परात्मपूर्वजा
नेकराजनामभिरंकितम्। क्षमालिंगात्मपीडावत्कथिताहर्तृदायकम्। यदावेदयतेराज्ञेतद्भाषेत्यभिधीयते। इतिअर्थवत्
। प्रयोजनवत्। धर्मसंयुक्तम्। अल्पाक्षरप्रभूतार्थत्वादिगुणयुक्तम्। परिपूर्णमध्याहाराद्यनपेक्षम्। अनाकुलमसन्दिग्धा
क्षरम्। साध्यवत्। साधनीयार्थयुतम्। वाचकपदम्। गौणलाक्षणिकपदरहितं। प्रकृतार्थाविरोधिप्रागावेदितार्थेनसहसम्ब
न्धादि। प्रसिद्धंलोकप्रसिद्ध्यनतिक्रान्तं। अविरुद्धम्पुरराष्ट्रप्राड्विवाकराजाद्यविरुद्धम्। पूर्वापराविरुद्धंव्यवहारिकधर्म्मा

प्रपञ्चितम्। तत्र नारदः। अन्यार्थमर्थहीनं च प्रमाणागमवर्जितम्। लेख्यहीनाधिकं भ्रष्टं भाषादोषा उदाहृताः। एतांश्च
एव विवृतवान्। अर्थे साधारणे यत्रैको सम्बन्धो यो यानियुक्तकः। लेखयेदन्यभाषार्थमन्यार्थं तं विदुर्बुधाः। गणकार्य्यमेकोवाय
द्यसम्बन्धी तद् नियुक्तो वा लेखयेद्यस्यां भाषायामित्यर्थः। ब्रह्मघ्नायमिति द्वेषात् क्रोधाद्वापि वदेन्नृपः। साध्यं च मोचयेत्पश्चाद
र्थहीनां तु तां विदुः। उक्तं साध्यवादिना यस्यां न्यूज्यते सा भाषार्थहीनेत्यर्थः। गणितेन तु लिखितेमेयेतं प्राक्षेत्रगृहादिषु। यत्र
संख्यान निर्दिष्टा सा प्रमाणविवर्जिता। संख्यानं संख्येति व्युत्पत्त्या संख्या अहनं गणनं तेन तन्मानं मानानां परिग्रहः। विक्रया प्राप्त
र्थार्थं यथं कीर्तनं क्रमागतम्। न चैवं लिख्यते यत्र सा भाषा त्वनागमा। समा मासस्तथा पक्षस्तिथिर्वारस्तथैव च। यत्रैतानि न वि
द्यन्ते लेख्यहीनां तु तां विदुः। अवश्यं यद्यत्र पूर्वोत्तरीयानि लेख्यान्तर्रूपाणि चालेख्यहीनेत्यर्थः। लेखयित्वा तु तां भाषामनिर्दिष्टे तथो
त्तरे। निर्दिशेत् साक्षिणः पूर्वमधिकान्तां विनिर्दिशेत्। साक्षिण इति प्रमाणोपलक्षणं। व्युत्क्रमादत्राधिकं तेनाप्राप्तकालता
कथिता। यत्र स्थानु यथापूर्वं निर्दिष्टं पूर्ववादिना। सन्दिग्धमेव लेख्ये समग्रष्टा भाषा तां तु तां विदुः। उभयं पूर्वमिति पाठे पक्षद्व
यमपि प्रतिज्ञावादिनैव निर्दिष्टं स्यादित्यर्थः। कात्यायनः। अप्रसिद्धं निराबाधं निरर्थं निःप्रयोजनम्। असाध्यं वा विरुद्धं वा प
क्षाभासं विवर्जयेत्। अप्रसिद्धमाह। बृहस्पतिः। न केनचित्कृतो यस्तु सोऽप्रसिद्ध उदाहृतः। यथा। फलवत्सस्तस्तष्टक्षेत्र
मपहृतमिति। मदीयं शशविषाणं गृहीत्वा न प्रयच्छतीत्यादि अप्रसिद्धमित्याह विज्ञानेश्वरः। बृहस्पतिनाप्यदमसाध्योदाहर
णमुक्तं तच्च वक्ष्यते। निराबाधमित्यत्र व्यर्थमस्मन्मन्दिरदीप्यमानदीपकप्रकाशेनायं स्वमन्दिरे व्यवहरतीति प्रभृति निरर्थम
भिधेयहीनं मदीयं कचटतपजबगडदशं गृहीत्वा न ददातीत्यादि विज्ञानयोगी। बृहस्पतिवचनात्त्वन्यथा निरर्थकपदार्थः प्रती
यते। यथाह। स्वल्पापराधः स्वल्पार्थो निरर्थक इति स्मृत इति। एतस्योदाहरणं स्मृतिचन्द्रिकायां। अहमनेन सस्मितमीक्षि
तः। मामको शिक्षातेनापहृतेत्यादीनि। निष्प्रयोजनं यथायं देवदत्तो अस्मद्गृहसन्निधौ सुस्वरमधीत इत्यादि मिताक्षरा स्मृतिच

स्त्यजेत्। परस्परविरुद्धानियःपदानिनिवेशयेत्। विरुद्धपदसंकीर्णाभावात्तस्यनसिध्यतीति। यत्तु। पुरसष्ट्रविरुद्धश्च
यश्चराज्ञाविवर्जितः। अनेकपदसंकीर्णःपूर्वपक्षोनसिध्यतीतिस्मरणात्तस्यायमर्थः। राज्ञाविवर्जितोराजन्यकस्मृत्यादिविष
यकर्णादानादिपदमिश्रितस्तुक्रियाभेदेनयुगपन्नसिद्ध्यतीति। मदीयारूपकाङ्यन्तोनयावृद्ध्यानेनगृहीताःसुवर्णञ्चयद
स्यहस्तेमयानिक्षेपीकृतमयमिदंमदीयक्षेत्रमपहरतीत्यनेकपदविषयस्यापिपक्षस्यक्रमेणाप्यनुपादेयत्वेतत्वनिर्णयाभाव
प्रसंगेनयुक्तिविरोधात्। बहुप्रतिज्ञंयत्कार्यंव्यवहारेषुनिश्चितम्। कामन्तदपिगृह्णीयाद्राजातत्त्वबुभुत्सयेतिकात्यायनवच
नविरोधाच्च। तस्माद्युगपत्पक्षाभासतैवेवरमणीयम्। अनेकवस्तुसङ्कीर्णस्यापक्षत्वन्त्वपदसम्बद्धम्। हिरण्यरूपकवा
संसिस्वानेनमत्तोवृद्ध्यागृहीतान्यस्यहस्तेमयानिःक्षिप्तान्यनेनापहृतानिवेत्येकस्मिन्नपिपदेयुगपदपीदृशपक्षोपन्यासस्यादुष्ट
त्वात्। साध्यंचविधिमुखेनप्रतिषेधमुखेनवापक्षनिक्षेपणीयमित्याहकात्यायनः। न्यायंमत्तोऽकृतेकर्त्तुमन्यायंवाकरोत्ययम्।
नलेखयतियस्त्वेवंतस्यपक्षोनसिध्यति। न्यायंस्वमित्यनेनममैतावद्धनमादायनददातीत्यादिप्रतिवन्धमुखतोपिलक्षिता।
अन्यायंवेत्यनेनममेदमपहरतीत्यादिविधिमुखताप्रदर्शिता। वृहस्पतिरपि। प्रतिज्ञादोषनिर्मुक्तंसाध्यंसत्कारणान्वित
म्। निश्चितंलोकसिद्धञ्चपक्षम्पक्षविदोविदुरिति। प्रतिज्ञादोषैःप्रतिज्ञासंन्यासादिभिर्मुक्तंरहितम्। तेचदर्शिताःप्रा
क्। साध्यंसाध्यार्हम्। प्रत्यार्थिधर्म्मविशिष्टधर्मिवचनमितियावत्। सत्कारणान्वितंस्फुटदोषरहितहेतुसहितम्। नि
श्चितंसन्देहाजनकंवाक्यरचनायुक्तन्नतुस्वयमेवनिश्चितंविप्रतिपन्नावर्थेनिश्चयाभावात्। लोकसिद्धंव्यावहारिकधर्मावि
रुद्धम्। अतएवमनुः। सत्यानभाषाभवतियद्यपिस्यात्प्रतिष्ठिता। बहिश्चेद्भाष्यतेधर्म्मान्नियताद्व्यावहारिकात्। प्रतिष्ठि
ताप्रसिद्धत्वादिदोषनिर्मुक्तादिभाषाप्रतिज्ञाव्यावहारिकधर्म्माविरुद्धाचसत्याग्राह्यानभवतिराजादीनामित्यर्थः। भवदेव
स्तु। यत्रश्रुतमात्रमेवसतिलोकानांसम्प्रत्ययस्तल्लोकसिद्धन्तेननिर्धनकृतोलक्षादिसंख्यधनाक्षेपोनपक्षइतिव्याचख्यौतद्वा

धरूपप्रतिज्ञादोषवत्त्वेनैव तादृशपक्षस्य निराकरणात्। प्रतिज्ञादोषनिर्मुक्तमित्यनेनैव गतार्थे। अयञ्च पक्षः प्राक् पाण्डुलेख्यं भूमिफलकादौ कारयित्वा शोधितः पश्चात् पत्रे लेखनीयः। तथा च बृहस्पतिः। अधिकाञ्छातयेदर्थान्न्यूनांश्च परिपूरयेत्। भूमौ निवेशयेत्तावद्यावदर्थो विनिश्चितः। शातयेदुद्धरेत्। भूमाविति पाण्डुलेख्ययोग्याधारोपलक्षणम्। अत एवाह। स एव। पूर्वपक्षं स्वभावोक्तं प्राड्विवाकोऽभिलेखयेत्। पाण्डुलेखेन फलके ततः पत्रे विशोधितमिति। स्वभावोक्तन्न भयाद्युपाधिनोक्तम्। व्यासोऽपि। पाण्डुलेखेन फलके भूमौ वा प्रथमं लिखेत्। ऊनाधिकन्तु संशोध्य पश्चात् पत्रे निवेशयेत्। शोधनञ्चोत्तरयोग्यतावधि विधेयम्। न ततः परमनवस्थापत्तेरदृष्टार्थतापाताच्च। तथा च नारदः। शोधयेत्पूर्ववादन्तु यावन्नोत्तरदर्शने। अवष्टब्धस्योत्तरेण निवृत्तं शोधनम्भवेत्। अवष्टब्धस्योत्तरयोग्यस्य यस्त्वर्थी प्रगल्भत्वात् पक्षदोषगुणहानादानाभ्यां शोधयितुमसक्तस्तस्य वक्तव्यार्थं निर्धार्य सभ्यैरेव संशोधनीयः। यथाह बृहस्पतिः। अभियोक्ता प्रगल्भत्वाद्वक्तुन्नोत्सहते यदा। सभ्यैस्तु शोधनन्तस्य कार्यमर्थानुरूपतइति। यदि भाषामशोधयित्वैवोत्तरन्दापयन्ति सभ्यास्तदा रागाल्लोभाद्भयाद्वापीत्याद्युक्तदण्डेन सभ्यान् दण्डयित्वा पुनः प्रतिज्ञालेखनपूर्वकं व्यवहारः। प्रवर्त्तनीयो राज्ञेति तात्पर्य्यम्। यदार्त्तार्थिप्रत्यर्थिनोर्लेखनापाठवन्नृपकीयलेखकद्वारा तौ भाषोत्तरे लेखयतः। स चान्यतरपक्षपातेनान्यथा लिखत्यन्यथा राजा चौरवद्दण्डयेदित्याह कात्यायनः। अन्यदुक्तं लिखेदन्यद्योऽर्थिप्रत्यर्थिनां वचः। चौरवच्छासयेत्तन्तु धार्मिकः पृथिवीपतिरिति। अत्र शासयेदित्युक्तेस्तत्प्रयोजनम्पुनस्तादृशकार्ये वृत्तिनिरोधे॥ स्मृतितत्त्वे तु चौरवच्छासयेदित्येव पठितम्॥●॥ एवमुक्तलक्षणः पक्षश्चतुर्विधः। तथा च बृहस्पतिः। शंकाभियोगस्तत्त्वञ्च लभ्येऽर्थेऽभ्यर्थिनन्तथा। वृत्ते वादे पुनर्न्यायः पक्षो ज्ञेयश्चतुर्विधः। चतुर्विधः पूर्वपक्षः प्रतिपक्षस्तथैव च। चतुर्धा निर्णयः प्रोक्तः कैश्चिदष्टविधः स्मृतः॥ भ्रान्तिः शङ्का समुद्दिष्टा तत्त्वन्तत्त्वार्थदर्शनम्। लभ्येऽर्थेऽभ्यर्थनं मोहस्तथा वृत्ते पुनः क्रियेति। नारदः। सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता। तद्धानौ हीयते वादी तरंस्तामुत्तरो भवेत्। उत्तर उत्कृष्टो विज

येतियावत्। यद्यपिन्यायाख्यपञ्चावयववाक्यान्तर्गतप्रतिज्ञास्वरूपंसाध्यधर्मविशिष्टधर्म्मिवचनमात्रंतथाप्यत्रसत्कारणान्वि
तमित्युक्तत्वात्सहेतुकसाध्यविशिष्टधर्मिवचनंप्रतिज्ञेतिगम्यते। हेतोश्चपक्षभूताऽधमर्णादिनिष्ठत्वन्तदनंगीकृतंक्रियापा
देनसिध्यतीतिध्येयम्। तथासतिस्थापनानुमानप्रयोगएवप्रतिज्ञा। प्रतिस्थापनानुमानप्रयोगएवचोत्तरमत्रपर्यवस्य
ति। अतएवस्मृत्युक्ता।उभयाभासायथायथमर्थान्तरमप्यनुयोज्यानुयोगासिद्ध्यादिनिग्रहस्थानहेत्वाभासादिष्वेवपर्यव
स्यन्ति। ततश्चत्वंशतंमह्यन्धारयसि। घटत्वेनमत्तोगृहीततावद्धनत्वादितिभाषाशरीरम्। नधारयाम्यगृहीतत्वात्प्रति
दत्तत्वाद्वेत्याद्युत्तरशरीरम्। अत्रचनसाधुशब्दनियमस्तदनभिज्ञानामर्थार्थिप्रत्यर्थित्वदर्शनात्। बोधकास्तुयेषांयेशब्दाः
प्रसिद्धास्तैरेवभाषालिखनीयम्। प्रतिवादिसभ्यादीनांतदभिज्ञत्वेभाषाद्वयाद्यभिज्ञैस्तैरेवबोधनीयाइत्याद्यूह्यम्। अतए
वविष्णुधर्मेष्वापनेपिसाधुशब्दनियमान्नारदउक्तः। संस्कृतैःप्राकृतैर्वाक्यैर्यःशिष्यमनुरूपतः। देशभाषाद्युपायैश्चबोधये
त्सगुरुःस्मृतइति। इतिप्रतिज्ञापादोनिरूपितः॥●॥ अथोत्तरपादोनिरूप्यते। तच्चनिर्दोषायाम्भाषायांनिश्चितन्तदर्थेन
प्रत्यर्थिनोत्तरन्देयम्। तथाचबृहस्पतिः॥ विनिश्चितेपूर्वपक्षेग्राह्याग्राह्यविशोधिते। प्रतिज्ञार्थेस्थिरीभूतेलेखयेदुत्तरन्त
तः। विनिश्चितेसंशयरहितज्ञानगोचरीकृतार्थेविशोधितेऽतएवस्थिरीभूतेलेखयेदितिवाचयेदित्यस्याप्युपलक्षणंवाचनपू
र्वकत्वाल्लेखनस्य। इदञ्चार्थिसन्निधावेवलेखनीयमित्याह। याज्ञवल्क्यः। श्रुतार्थस्योत्तरंलेख्यंपूर्वावेदकसन्निधौ। श्रु
तोभाषार्थोयेनप्रत्यर्थिनासःश्रुतार्थस्तस्येतिकर्त्तरिषष्ठी। तेनलेख्यमित्यर्थः। पूर्वावेदकोर्थीपूर्वपक्षादुत्तरोपन्यासइत्युत्तरंपू
पक्षोपमर्दकमुच्यतेयथाहतुनारदप्रजापती। पक्षस्यव्यापकंसारमसन्दिग्धमनाकुलं। अव्याख्यागम्यमित्येतदुत्तरन्तद्विदो
विदुरिति। पक्षस्यव्यापकंनिराकरणसमर्थं। सारंन्याय्यम्। असन्दिग्धंसन्देहजनकनानार्थादिशब्दरहितं। अनाकुलंपूर्वा
पराविरुद्धम्। अव्याख्यागम्यमप्रसिद्धदेशभाषाभिधानेनाप्रसिद्धार्थपददुश्लिष्टविभक्तिसमासव्यवहितयोजनाद्यवधारण

कल्पनाविपरीतामसाध्याहारमभिधानेनवाचयन् क्लिष्टव्याख्यानेनदुर्गमार्थेनभवति । हारीतोपि । पूर्वपक्षार्थसम्बन्धमनेकार्थ
मनाकुलम् । उपयुक्तमव्यस्तपदंव्यापकंनातिभूरि च । सारभूतमसन्दिग्धंस्वपक्षैकान्तसम्भवम् । अर्थिअव्यमगूढार्थन्देय
मुत्तरमीदृशमिति । अनेकार्थमनेकेऽर्थाउपयुक्ताविशेषणादयोयत्रतत्तथा । नत्वनेकार्थपदयुक्तन्तस्यसन्दिग्धत्वेनदुष्ट
त्वात् । अनाकुलमुत्तार्थम् । उपयुक्तशब्दैरन्यूनमनल्पं । अव्यस्तानिव्यत्यासयोजनानपेक्षाणिपदानियत्रतदव्यस्तपद
म् । व्यापकम्परिपूर्णार्थं । नातिभूरि अनुपयोगिव्यस्तरहितम् । सारभूतत्वासन्दिग्धत्वेव्याख्याते । स्वपक्षैकान्तसम्भवम् ।
स्वपरिगृहीतपक्षएवैकान्तेननियमेनसम्भवतिनकथञ्चिदपिपक्षान्तरकक्षामवगाहतेतत् । अन्यद्व्यक्तार्थम् । शाठ्यदर्पा
दिभिर्य्यदोत्तरंनददातिप्रतिवादीतदाकथञ्चित्सभ्यप्राड्विवाकेनराज्ञोत्तरन्दापनीयमित्याह । बृहस्पतिः । पूर्वपक्षेयथा
र्थन्तुनदद्यादुत्तरन्तुयः । प्रत्यर्थीदापनीयःस्यात् सामादिभिरुपक्रमैः । प्रियपूर्वंवचःसामभेदस्तूभयदर्शनम् । अर्था
पकर्षणान्दण्डस्ताडनंबन्धनन्तथा । उभयैश्चोद्यमानस्तुनदद्यादुत्तरन्तुयः । अतिक्रान्तेसप्तरात्रेजितोसौदण्डमर्हति ।
उभयैर्मृदुभिस्तीव्रैश्चोपायैरित्यर्थः । कात्यायनः । यथार्थमुत्तरन्दद्यादयच्छन्नञ्चदापयेत् । मोहाद्वायदिवाशाठ्याद्यन्नोक्तं
पूर्ववादिना । उत्तरान्तर्गतंवापितद्ग्राह्यमुभयोरपि । मोहादिवशात्पूर्ववादिनाप्रागनुक्तमप्युत्तरान्तर्गतमुत्तराभिधानसम
यएवप्रोच्यमानमुभयोरुत्तरवादिव्यवहारदर्शिनोर्ग्राह्यंग्रहणार्हम्भवतीत्यर्थः । उत्तरलेखनोत्तरन्तुनग्राह्यमित्यर्थसि
द्धमपिस्पष्टार्थमाह । सएव । उभयोर्लिखितेवाच्येप्रारब्धेकार्यनिर्णये । अयुक्तन्तत्रयोब्रूयात्तस्मादर्थात्सहीयतेइति ॥
● ॥ अथोत्तरभेदाः । तत्रकात्यायनः । सत्यंमिथ्योत्तरञ्चैवप्रत्यवस्कन्दनन्तथा । पूर्वन्यायविधिश्चैवमुत्तरंस्याच्चतुर्वि
धमिति ॥ सत्यंसम्प्रतिपत्तिः । प्रत्यवस्कन्दनङ्कारणोत्तरम् । व्यासः । साध्यस्यसत्यवचनंप्रतिपत्तिरुदाहृता । यथारूप
कम्भृतंमह्यन्धारयसीत्युक्तेसत्यन्धारयामिदास्यामीतिच । यद्यपिभाषार्थस्यानिरुकरणादनुत्तरत्वमस्याभाति । तथाप्य

भियोक्तासाध्यतयोपन्यस्तस्यसिद्धत्वोपन्यासात्साध्यत्वनिराकरणादुत्तरत्वमस्यावसेयम्। तथाचस्मरणम्। अनुक्त्वाकारणं यत्रपक्षवादीप्रपद्यते। प्रतिपत्तिस्तुसाज्ञेयाकारणेदूषणंपृथक्॥ कारणम्परोक्तहेतुदूषणं। वादीप्रत्यर्थी। कारणेकारणोत्तरेपृथक्दूषणम्भवेदित्यर्थः। नचास्याःसिद्धसाधनत्वेनसदुत्तरत्वेपूर्ववादिनोनिग्रहस्थानंस्यादितिशङ्क्यंइष्टापत्तेः। पराजयेपिपूर्ववादिनोदण्डःपरंनभवति अपराधाभावात्। वाचस्पतिस्तुतत्त्वनिर्णिनीषुकथायाःसिद्धसाधनस्यादोषत्वान्ननिग्रहोपीत्याह। नचैवन्धर्माधिकरणप्रवेशपक्षलिखनेपूर्ववादिनोवृथेतिवाच्यम्। प्राग्विप्रतिपन्नस्यानुतापवतःप्रत्यर्थिनःपश्चादपिसंप्रतिसम्भवात्सन्धिकरणोत्तरमिव। सन्धिकरणञ्चनिरूपयिष्यते॥●॥ मिथ्योत्तरन्तुनधारयामीत्यादि। यथाहकात्यायनः। अभियुक्तोऽभियोगस्ययदिकुर्यादपह्नवम्। मिथ्यातत्तुविजानीयादुत्तरंव्यवहारतइति॥ व्यासोपि। मिथ्यास्यात्साध्यनिह्नुतिरिति। साध्यस्यसहेतुकसाध्यस्यशब्दतोर्थतोवानिह्नवोमिथ्योत्तरमित्यर्थः। केवलसाध्यनिह्नवस्यसंप्रतिपत्तिभिन्नोत्तरान्तरेष्वपिप्रसंगादितिवाचस्पतिः। तच्चिन्त्यं। सहेतुकसाध्यनिह्नवस्यतत्रापिसम्भवात्। तस्मादपह्नवमात्रंकारणाद्यसंवलितंमिथ्योत्तरम्। कारणप्राङ्न्यायसम्वलितन्तूत्तरान्तरेइतिवयम्॥●॥ एतच्चमिथ्योत्तरञ्चतुर्विधम्। मिथ्यैतन्नाभिजानामितदातत्रनसन्निधिः। अजातश्चास्मितत्कालइतिमिथ्याचतुर्विधमितिव्याससमरणात्। अत्रचमिथ्यैतदितिकण्ठतोपह्नवोनजानामीत्यादिरर्थतः। अतएवाहकात्यायनः। श्रुत्वाभाषार्थमन्यस्तुयदितम्प्रतिषेधति। अर्थतःशब्दतोवापिमिथ्यातज्ज्ञेयमुत्तरमिति। अत्रवाचस्पतिः। भाषार्थस्यसहेतुसाध्यस्यमिथ्योत्तरेणनिह्नवेपिहेत्वपह्नवांशएवस्वरूपासिद्धिरुपस्थापनादोषः। साध्यापह्नवांशस्तुकारणोत्तरादिव्यवच्छेदकतयान्तर्भाव्यते। तथाहि। गृहीतत्वाद्धारणभावावादिनासाध्यउपन्यस्तेकालदेशविशेषगर्भायान्तस्यांमयानगृहीतइतिहेत्वभावशब्देनैवोच्यते। कालविशेषगर्भायान्तुतदानाहंजातइत्यर्थात्। देशविशेषगर्भायामपितदातत्राहंनासनित्यर्थात्। अतएवार्थिकभावाप्रतिषेधस्त्रिविधःसोपादेशमि

थ्योत्तरम्। आद्यस्तु केवलमिथ्योत्तरमिति। नचैवंग्रहणास्कन्दनयोरसन्निधानाजन्मनोरेवप्रतिपाद्यतास्तु किमार्थि
काग्रहणपर्य्यन्ततात्पर्य्येणेतिवाच्यम्। यद्यपि तदाजातस्तत्र संस्तथापि न गृह्णातीति तादृशांस्त्वेषांग्रहणाभावात्ततः सन्निधा
नजन्ममात्रस्यग्रहणाद्याप्यत्वाद्व्यापकाभावात्। व्याप्यग्रहणाभावासिद्धेस्तत्कालीनजन्माभावसन्निधानाभावयोरेवग्रहणाभा
वसाधकता। नह्यनुत्पन्नो गृह्णात्यसन्निहितो वेति सम्भवतीति तावत्पर्य्यन्ततात्पर्य्यावश्यम्भावात्। अत एव सर्वस्मिन्नपि मिथ्यो
त्तरे स्थापकस्यग्रहणस्थापनाय क्रियोपन्यास इत्याह। नन्वुक्तं। साध्यानालिंगितहेत्वभावमात्रोपन्यासेऽर्थान्तरत्वापात्ता
त्। हेतुत्वस्य साध्यनिरूपितत्वेन तदभावमुखेन साध्याभावव्यवस्थापन एव स्थापनादूषणासम्भवात्। उत्तरान्तरव्यवच्छेद
मात्रस्यादृष्टतार्थपत्तेस्व। यत्र तु पूर्ववादिमः पित्रर्णादिग्रहणहेतुकधारणादिप्रतिज्ञातत्राज्ञानद्वारकसाक्षाद्ज्ञानदपह्नवो मि
थ्योत्तरम्। तत्कालाजन्मतद्देशासन्निधानयोरेतदीययोस्तदीययोस्तदीयग्रहणाभावसाधकत्वात्। अत एव प्रकाशस्वामि
क्रयेनाष्टिकेनादत्तत्वादिकमपि प्रमापणीयमित्यभियुक्तस्मरणमपि संगच्छते। अन्यथा दूषणादत्तत्वाद्यनुपन्यासादत्तत्वा
दिप्रमापणमधिकं स्यात्। तेन तत्प्रतिपादनेदत्तत्वादेर्नाष्टिकोक्तत्त्वास्कन्दकत्वादस्य प्रत्यवस्कन्दनरूपत्वात्तस्यैव तत्साध
नापत्तेर्मिथ्याक्रियापूर्ववाद इति विरुद्धमेव। इष्टापत्तावुच्यमानार्थां मिथ्योत्तरभेदत्वोक्तिविरोधात्। प्रत्यवस्कन्दनन्नाम सर्व
गृहीतम्परन्तु प्रतिदत्तम्प्रतिग्रहस्थेयं वेत्यादि। यथाह नारदः। अर्थिनालेखितोयोर्थः प्रत्यर्थी यदि तन्तथा। प्रपद्य कारणं
ब्रूयात्प्रत्यवस्कन्दनं स्मृतमिति। प्रपद्य स्वीकृत्य। यद्यपि भाषार्थस्य न सर्वांशस्वीकारोत्र सम्प्रतिपत्तित्वापत्तेः। कारणाभ्या
नर्थक्यापाताच्च। तथाच ग्रहणेन धारणेन तेन च प्रत्यर्पणीयत्वे साध्यत्वेन प्रतिज्ञाते न ग्रहणांशमभ्युपेत्य प्रतिदानेन प्रतिग्रहादि
नावाधारणाम्प्रत्यर्पणीयत्वाभावम्प्रत्यर्थी साधयति। मिथ्योत्तरादत एवास्य भेदः। तत्र भाषार्थस्य सर्वस्यापह्नवात्तत्त्वेकदेशा
नपह्नवात्। प्राङ्न्याये तु यथा यथमुभयसंभव इति ततोपि भेदः। तच्चनन्तरं वक्ष्यामः। यत्तु प्राङ्न्यायो धार्यमाणत्वादि सा

मान्याभावज्ञापकःकारणोत्तरन्तु तद्वत्सज्ञापकमिति तयोर्भेद इति वाचस्पतिनोक्तम्। तत्तुच्छम्। प्राङ्न्यायेनापि कारणमुखे नोभयोरपि ज्ञापनसम्भवात्। तस्मादस्मादुक्तमेव भेदकं न्याय्यः। त्रिविधञ्चैतत्। स्थापनाधिकबलन्तत्समबलवत्तदून बलञ्चेति। उदाहृतमेवाधिकबलम्। तत्र हि मह्यमयं शतस्य धारयः। प्रतिदेयतया मत्तो गृहीततावद्धनत्वादित्यादिभाषायाङ्क्रिय्यीतननादिस्थलेऽव्यभिचारवारणायेदानीन्तनधारणार्थापत्तिगम्यमपरिशोधितत्वादिविशेषणमर्थिनो वक्तुर्हृदिस्थमास्थेयन्तथा च प्रतिज्ञानादुपन्यासेन तत्सिद्धिः। प्रत्यर्थिनोक्ता भवतीति ध्येयम्। कात्यायनोऽपि स्पष्टमाचष्टे। प्रत्यर्थिनाभिहितो ह्यर्थः प्रत्यर्थी यदि तत्तथा। प्रपन्नकारणं ब्रूयादाधर्ष्यं भृगुरब्रवीत्। इति। आधर्ष्यमधरत्वन्दुर्बलत्वमिति यावत्। पूर्वपक्षस्येति शेषः। पूर्वपक्षदौर्बल्योत्तरस्य प्राबल्यमर्थात्तदुक्तम्। अत एव नारदः। आधर्ष्यं पूर्वपक्षस्य यस्मिन्नर्थवशाद्भवेत्। विवादे साक्षिग्रहणं प्रमाणमात्रोपलक्षणम्। प्रदीपकृतस्तु। धार्यमाणत्वे कारणं गृहीतत्वं प्रपन्नं ब्रूयात्। परिशोधनादिकमिति शेषः। अपरिशोधितत्वादिकञ्च स्थापनाहेतुविशेषणङ्कारणोत्तरे वाज्ञेयमित्याहुः। तन्न। व्यवहितयोजनाध्याहारयोर्विनाकारणमनुचितत्वात्। कारणम्प्रपद्यत्यन्वये तमित्यस्य साकांक्षत्वेनानन्वयप्रसङ्गाच्च। अन्ये तु प्रपद्य स्थापनाहेतुमभ्युपेत्य यत्तद्विपरीतवचनन्तत्कारणोत्तरमिति त्रितयपरमेवेदं वचनमिति वदन्ति। अत्राधिकसमबलकारणोत्तरयोः स्थापनायामाधर्ष्यसम्भवेनैतद्वाक्यस्य त्रितयविषयत्वायोग इति वाचस्पत्युक्तम्। दूषणाङ्कारणोत्तरस्य त्रैविध्यन्तदुक्तंखण्डयद्भिरनुपदमेवोद्धरिष्यते। समबलमियम्भूर्भटीयाक्रमागतत्वादित्येकेन भाषितेऽपरोऽपि तदेवोत्तरयति सप्रतिपक्षरीत्येति। दुर्बलं कारणोत्तरन्तु मयेयं विंशतिवर्षावधिभूमिरमुकस्वामिकाधीनेतीभाषायां स्वामिनैव पञ्चवर्षावधिमप्याहितत्वान्मदीयेति सप्रतिपक्षरीत्योत्तरितस्याधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरेति वचनाद्दुर्बलम्। अत्र चाधिकबले प्रतिवादिनः प्रमाणोपन्यासाधिकारः पूर्वजयसाधनाय। अन्ययोस्तु पूर्ववादिन एव। गुरावभिहिते हेतौ प्रतिवादिक्रिया

भवेत्। दुर्बलेवादिनःप्रोक्तानुक्त्योःपूर्वक्रियैवचेतिस्मरणात्। कारणात्पूर्वपक्षोपिउत्तरत्वम्प्रपद्यते। अतःक्रियासदाप्रोक्ता पूर्वपक्षप्रसाधिनी॥ इतिकारणाद्दुर्बलत्वात्। उत्तरत्वमुत्तमत्वम्। पूर्वपक्षबलवत्त्वहेतुकांपूर्ववादिनःक्रियाम्प्रतिपादयिता कात्यायनेनोत्तरस्यापिबलवत्त्वउत्तरवादिनःक्रियेत्युक्तम्भवति। इदंवाचस्पतिमिश्रोक्तम्। व्यवहारतत्त्वकारस्त्वभ्युपेतञ्चकार णोत्तरत्रैविध्यमयुक्तम्। वचनानारूढत्वाद्युक्त्यभावाच्च। तथाहि। अर्थिनालेखितइत्यादिनारदवाक्यस्याधिकबलवत्कार णविषयत्वेनकिञ्चिद्बीजमस्ति। प्रत्युततस्यतन्मात्रविषयत्वेत्रितयसाधारणकारणोत्तरस्वरूपाभिधायकवचनान्तराभावात्स्व रूपाज्ञानप्रसंगः। भवतापितस्यत्रितयसाधारण्याभ्युपगमाच्च। समानबलोनबलविषयवचनान्तराभावाच्च। यत्तोक्तंतेका त्यायनीये। अर्थिनाभिहितोह्यर्थःप्रत्यर्थीयदितन्तथाप्रपद्यकारणंइत्यादिवाक्येनारदीयेवाधर्ष्ये पूर्वपक्षस्येत्यादिवाक्येनावदा धर्षैश्च हेतूपादानात्समानबलकारणोत्तरैकविषयीभवतुमर्हे तदेकवाक्यतयार्थिनालिखितोर्थःप्रत्यर्थीइत्यपिनारदवाक्यमधि कबलवत्कारणोत्तरविषयमेवेति। तदबुद्धिपूर्वकम्। तथासतिनारदीयमेववचनद्वयमनर्थकम्प्रसज्यतइतिसामान्यविशे षविषयत्वमेवतस्याभ्युपगन्तव्यम्। अस्त्वेवन्तथापितिसामान्यलक्षणानभिधानदोषोपिप्रतिक्षिप्तः। आधर्ष्येपितवबचनयो स्तूक्तयुक्त्योर्वैचमात्रविषयत्वम्। समबलातिबलयोस्त्वाधर्ष्याभावात्तदाक्षिप्तंलक्षणान्तरमूह्यमितिसर्वंसुस्थमितिचेन्न आधर्ष्यमुपमर्दकत्वंवाद्युपन्यस्तग्रहणांगीकारेसाधारणादिकारणप्रतिदानाद्युपन्यासेतस्यैवसाध्यत्वविर्भावेनतदुक्तग्रहण योःप्रमाणोपन्यासानपेक्षत्वमेव। इदमेवाभिप्रेत्यकल्पतरौलक्ष्मीधरेणाह। आधर्ष्येप्रमाणानर्हत्वम्पूर्वपक्षस्येत्यर्थइति। अतएवकारणेप्रतिवादिनीतिसामान्यतएवकारणोत्तरेप्रतिवादिनएवक्रियावक्ष्यते। तेनयत्त्रितयसाधारणत्वमस्यवच सोन्यमतमुपन्यस्याधर्ष्येकिंविरोधाद्दूषितम्। तदप्युक्तम्। वस्तुतस्तुप्रमाणोपन्यासेनसामीचीन्यासामीचीन्यकृतंत्रैविध्य मुत्तरान्तरेपिपारमार्थिकंसम्भवत्येवेतिकारणोत्तरमात्रेतदभिधानमर्हन्ततःपूर्वन्तत्रापिदुर्ज्ञेयम्। स्वस्वाभिमानेनतुपक्षोत्त

रयोः सार्वत्रिकमधिकबलत्वमेव। अन्यथा विवादाप्रवृत्तिप्रसक्तेः प्रमाणोक्तिप्रत्याकलितयोस्तद्विवेचनार्थयोरत एवोपयोगो न्यथाधिकबलकारणोत्तरे तयोरनुपयोगाद्विफलत्वप्रसङ्गः। संप्रतिपत्तिवत्। गुरवभिहिते हेताविथ्यादेस्तु स्मरणस्य नका रणोत्तरचैविध्येन क्रियाव्यवस्थापकत्वम्। कारणे प्रतिवादिनीति सामान्यवचनसंकोचस्य निर्युक्तिकस्य प्रसक्तेः किन्तु मिथ्या द्युत्तरत्रैविध्येन। तथाहि गुरौ पूर्वपक्षोक्तहेत्वभ्युपगमेन कारणोत्तरे कारणोपन्यासात्प्राङ्न्याये च तदुपन्यासात्तयोः साध्यत्वा विर्भावेवाद्युक्तसाध्ये साध्यत्वतिरोधानात्प्रतिवादिनि क्रिया। दुर्बले तूत्तरे मिथ्याख्ये भावरूपत्वेन भावप्रमाणाभावमात्रेण सिद्धेः साध्यत्वानर्हे वादि साध्यस्य साध्यत्वातिरोधानात्तस्य क्रिया। तुल्ये द्वयोरपि भावसाधकयोरर्थिप्रत्यर्थिनोः पूर्वक्रिया पूर्वं मममे दमिति वदतोऽन्यतरस्येत्यर्थः। इदञ्च साक्षिषूभयतः सत्स्वित्यादिवचनं व्याचक्षाणा निपुणतरमुपपादयिष्यामः। कारणापू र्वपक्षोपीति कात्यायनीयन्तु प्रामाणिकत्वनिबन्धनपूर्वपक्षस्योत्तमत्वम्प्रतिपादतः यद्युच पूर्ववादिनः क्रियावाक्यान्तरेणोक्तात्द्विय यत्वेनाप्युपपद्यत इति न किञ्चिदेतत्। अत एव मिताक्षराकल्पतरुरत्नाकरमदनरत्नस्मृतिचन्द्रिकाकारादिभिरिदमुपेक्षितम् ॥ ● ॥ प्राङ्न्यायलक्षणमाह। हारीतः। अस्मिन्नर्थे समानेन वादः पूर्वमभूत्तदा। जितोऽयमिति चेद्ब्रूयात्प्राङ्न्यायः स्यात्तदुत्त रम्। कात्यायनबृहस्पती। आचारेणावसन्नोपि पुनर्लेखयते यदि। सोभिधेयो जितः पूर्वं प्राङ्न्यायश्च स उच्यत इति। अतः प्रा ङ्न्यायपदमन्वर्थम्। प्राङ्न्यायस्य च प्रागवस्थायां मिथ्याकारणान्यतरोत्तरोपादानेनैव व्यवहारप्रवृत्तिरिति प्राङ्न्यायसाधने तद्दे षसिद्धम्भवतीति सम्भवति धार्यमाणत्वादि सामान्याभावतद्वंसोभयज्ञापकता प्राङ्न्यायस्येति मिथ्याकारणोत्तराभ्यामस्य भेदः। त्रिप्रकारश्च प्राङ्न्यायः। तथा च कात्यायनः॥ विभावयामि कुलिकैः साक्षिभिर्लिखितेन वा। जितश्चैवमयायम्प्राक्प्राङ्न्यायस्त्रि प्रकारकः। कुलिकैरिति प्राक्तनव्यवहारदर्शिनामुपलक्षणम्। इत्युत्तरभेदाः॥ ● ॥ अथोत्तराभासा। यद्यप्युत्तरलक्षणर हित्यादेवोत्तराभासत्वमर्थसिद्धम्भवतीति नोत्तराभासा पृथग्वाच्या। योगीश्वरादिभिरत एव नोक्ताः। तथापि सस्पष्टीकरणाय

कैश्चिदुक्ताः तथाच मिताक्षराधृतवचनम्। संदिग्धमन्यत्प्रकृतादत्यल्पमतिभूरि च। पक्षैकदेशव्याप्यन्यत्तथा नैवोत्तरम्भवेत्।
इति। एतच्च तत्रैवोदाहरणनिष्ठतया व्याख्यातम्। सुवर्णशतमनेन गृहीतमिति उक्ते सत्यं गृहीतं सुवर्णशतं माषकशतं
चेत्येवं सन्दिग्धमुत्तरम्भवेदिति। प्रकृतादन्यत्सुवर्णशताभियोगे पणशतन्धारयामीति। अत्यल्पं सुवर्णशताभियोगे पञ्च
धारयामीति। सुवर्णशताभियोगे पञ्चशतानि धारयामीत्यतिभूरि। पक्षैकदेशव्यापि हिरण्यवस्त्राभियोगे हिरण्यं गृहीत
मित्येतावन्मात्राभिधानम्। व्यस्तपदम्पदान्तरेणाभियोगपदान्तरमादायोत्तरम्। यथा मदीयमेतावद्द्रव्यं धारयतीत्यभि
योगेऽनेनाहन्ताडित इत्यादि। अव्यापि देशस्थानादिभाषाविशेषेणाव्यापि। यथा मध्यदेशे वाराणस्याम्पूर्वदिगवस्थित
मदीयमनेन नक्षत्रमपहृतमित्यभियोगे नक्षत्रमपहृतमिति। निगूढार्थं मह्यं सुवर्णशतं धारयतीत्यभियोगे किमहमेवास्मै धा
रयामीति। अत्र ध्वनिना प्राड्विवाकः सभ्या वर्था वान्यस्मै कस्मैचिद्वा धारयतीत्यादि सूचनसंभवान्निगूढार्थमिदम्। पूर्वापर
विरुद्धमाकुलं यथा सुवर्णशतं मह्यं धारयतीत्यभियोगे धारयामि परन्तु गृहीतमेव नेति गृहीतम्परन्तु न धारयामीति वा कार
णाद्युपन्यासमधारणादावकृत्वैवोत्तरम्। व्याख्यागम्यम्। दुश्लिष्टसमासाध्याहारादिसापेक्षत्वेन मेयार्थम्। यथा सुवर्णश
तविषये पितृकृतर्णाभियोगे गृहीतवचनात्सुवर्णानां पितुर्न जानामीति। अत्र गृहीतशतसुवर्णस्य पितुर्वचनात्सुवर्णानां शतं
गृहीतमिति न जानामीत्यर्थे विवक्षायामीदृक्षमसमर्थसमासाध्याहारादिसापेक्षत्वादुक्तकृतस्वाभिमतार्थपरव्याख्यावगम्यार्थं।
असारं। न्यायविरुद्धम्। यथा सुवर्णशतमनेन मत्तो वृद्ध्या गृहीतन्तस्य वृद्धिरेव दत्तानमूलमित्यभियोगे सत्यं वृद्धिर्मया द
त्ता मूलं तु न गृहीतमिति। अत्र क्वचित्पूर्वपक्षानिराकरणात्क्वचिदसम्बद्धार्थत्वात्क्वापि विलंवितार्थप्रत्यायकत्वाद्यथायथम
नुत्तरत्वमवसेयम्। यद्यप्युदाहृतमसारम्पूर्वापरविरोध एव पर्य्यवस्यति। तथापि क्वचित्साक्षात्क्वचिन्न्यायविरोधात्तथात्व
मिति भेदकन्द्रष्टव्यम्। स्मृतिचन्द्रिकाकारस्तु काकदन्तसद्भावोत्तरमिष्यत इति। कात्यायनवचनञ्च तत्र संवादितवान्। का

कस्य दत्तानो सन्ति सन्तीत्यादि यदुत्तरम् । असारमिति तत्तेन समन्नोत्तरमिष्यत इति । कात्यायनेनान्येप्युत्तराभासा उक्ताः
। अप्रसिद्धं विरुद्धं यद्यत्यल्पमतिभूरि च । सन्दिग्धासम्भवाव्यक्तमन्यार्थं चातिदोषवत् । यद्व्यस्तपदमव्यापि निगूढा
र्थं तथाकुलम् । व्याख्यागम्यमसारञ्च नोत्तरं स्वार्थसिद्धय इति । एतान्स्वयमेव स व्याचष्टे । चिह्नाकारसहस्रन्तु समयं चावि
जानता । भाषान्तरेण वा प्रोक्तमप्रसिद्धन्तदुत्तरम् । प्रतिदत्तं मया बाल्ये प्रतिदत्तं मया न हीति । यदेवमाह विज्ञेयं विरुद्ध
न्तादिहोत्तरम् । जितः पुरा मया वाद्य यस्मिन्नर्थे विवक्षिते । पुरा मयाथमिति यत्तदूनं चोत्तरं स्मृतम् । गृहीतमिति वाच्ये तु का
र्त्स्न्येन कृतं मया । पुरा गृहीतं यद्द्रव्यमित्येतदतिभूरि तु । देयं मयेति वक्तव्ये मया देयमितीदृशम् । सन्दिग्धमुत्तरं ज्ञेयं व्यवहा
रेषु बुधैः सदा । मया देयमित्यत्राकारप्रश्लेषस्यापि सम्भवात्सन्दिग्धमिदम् । असम्भवमस्माभिर्देयन्धनमस्मत्प्रपौत्रपुत्रे स्वद
त्तमित्येवमादि । अव्यक्तं सुखेन यदक्षराण्येव निर्णेतुमशक्यानि । एतावुत्तराभासावुदिष्टावपि स्पष्टाविति तेनेन न लक्षितौ ।
बलाबलेन चैतेन साहसं स्थापितं पुरा । अनुक्रमेतन्मन्यन्ते तदन्यार्थमितीरितम् । एतेन च बलेन प्राबल्येन अबलेन दौर्बल्ये
न च पुरा साहसं मनुष्यमारणादि स्थापितं हत्वा गोपितमिति यावत् । इत्यादि प्रकृतानुपयोगित्वादन्यार्थमित्यर्थः ॥ व्यस्तपद
म्पदान्तरेणाभियोगे कृते पदान्तरसंक्रमेणोत्तरमिति सोदाहरणं मिताक्षरायां व्याख्यातन्तत्प्रागेवोक्तम् । स्मृतिचन्द्रिकाया
न्तु पूर्वपक्षनिश्चयात्प्रागुच्यमानं सर्वमेवोत्तरं व्यस्तपदमिति व्याख्यातम् । व्यस्तम्पदं स्थानमुपन्यासो वस्य यस्येति व्युत्पत्तेः । भ
वदेवेन तु अव्यस्तपदव्यापीति पाठं लिखित्वाऽनन्वितार्थपदव्याप्तमिति व्याख्यातं व्यवहारतिलके । तन्नु दोषान्तरसंकरदयुक्तमि
ति प्राच्यमेव व्याख्याद्वयमनुसन्धेयम् । उत्तरमित्येकवचनाद्ग्राहवत्कोऽयादुत्तरसङ्करादप्युत्तराभासत्वं सूचितम् । कात्याय
नादिभिः स्पष्टमुक्तम् । पक्षैकदेशे यत्सत्यमेकदेशे च कारणम् । मिथ्या चैवैकदेशे च संकरात्तदनुत्तरमिति । संकरादनुत्तर
त्वबीजं कात्यायनेनैवोक्तं ॥ न चैकस्मिन्विवादे तु क्रियास्याद्वादिनोर्द्वयोः । न चार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयमिति । मि

ण्याकारणोत्तरयोः संकरेऽर्थिप्रत्यर्थिनोर्द्वयोरेकस्मिन्व्यवहारे क्रियोपन्यासः प्रसज्यते। मिथ्याक्रियापूर्ववादे कारणे प्रतिवादि-
नीति स्मरणात्। मिथ्यामिथ्योत्तरे। पूर्ववादे क्रियार्थिनः क्रियोपन्यास इत्यर्थः। यथा सुवर्णशतं रूपकशतं च त्वयानेन गृहीत-
मित्यभियोगे सुवर्णशतं न गृहीतं रूपकशतं तु गृहीतं किन्तु प्रतिदत्तं प्रतिग्रहलब्धं मिथ्यादि। द्वयोरेकक्रियोपन्यासाभावे च
व्यवहारघटकभेदे व्यवहारद्वयप्रसक्तावेकस्मान्नाव्यवहारान्तरप्रवर्तनौचित्याद्युगपद्व्यवहारासम्भवरूपा युक्तिर्बीजम्।
अत एव तत्र तस्यांशस्य तत्प्रमाणमात्रसाध्यत्वेऽक्रमेणोत्तरत्वमेवेति न्याय्यमिकं व्यवहारद्वयं तयोरेव प्रवर्तनीयमित्युक्तं मिताक्षरास्मृति-
चन्द्रिकादिग्रन्थेषु। कारणे प्राङ्न्यायसङ्करे तु प्रत्यर्थिन एव क्रियाद्वयं प्रसज्यते। कारणे प्रतिवादिनि प्राङ्न्यायकारणोक्तौ तु
प्रत्यर्थी निर्दिशेत्क्रियामिति स्मरणात्। यथा पूर्वोदाहरणमेव। यद्येवं ब्रूयात्सुवर्णशतं गृहीतं प्रतिदत्तं रूपकशतं तु प्राग्यं
व्यवहारमार्गेण मया पराजित इति। अत्र यद्यप्येकस्यैव प्रमाणाद्द्वयोपन्यासस्तथापि प्रागुक्तयायुक्त्या युगपद्व्यवहारासंभवरू-
पानुसरणेनैवोक्तेत्रापि क्रमिकव्यवहारप्रवृत्तिरिष्टैव। कारणोत्तरे साक्षिलेख्यादिभिस्तद्विभावनीयम्। प्राङ्न्यायस्तु तद्द-
र्शिभिर्जयपत्रेणावेति क्रमश्चावश्यकः। एवमुत्तरत्रसङ्करेऽपि। यथानेन सुवर्णं रूपकशतं वस्त्राणि च गृहीतानीत्यभियोगे स-
त्यं सुवर्णं गृहीतं प्रतिदत्तं च रूपकशतं न गृहीतं वस्त्रविषये प्राक्पराजित इति। अत्र द्वयोः क्रिययोः पूर्वन्यायेन एकस्य क्रियाद्वय-
मिति द्वयमप्यनुत्तरत्वे बीजम्। सम्प्रतिपत्तौ क्रियाभावाच्चतुःसङ्करेणोदाहार्य्यः सङ्करसम्भवमात्रेण तु मिताक्षराकारेणैव चतुःस-
ङ्करोऽप्युक्तम्। अत एवापि यत्र सम्प्रतिपत्तेरुत्तरान्तरेण सङ्करस्तत्रोत्तरान्तरोपादानेन व्यवहारः प्रवर्तनीयः। सम्प्रतिपत्तौ क्रि-
याभावादिति तेनैवोक्तं। सङ्करस्यैव क्रमिकव्यवहारश्चावश्यके क्रमोऽर्थिप्रत्यर्थिसभ्यानामन्यतरेच्छया बोध्यः। यत्र तु प्रभूता-
र्थविषयं च समन्वतरोत्तरस्य फलवत्तरत्वम्, व्यवहाराकरणेऽन्यतरस्य पीडातिरेकादिकं वा प्राप्नोति निर्गमकमस्ति तत्र तदुत्तरोपादा-
नेनैव प्रथमो व्यवहारः प्रवर्तनीय इत्याह। हारीतः। यत्प्रभूतार्थविषयं यत्र वा स्यात्क्रियाफलम्। उत्तरं तत्र तज्ज्ञेयमसंकी-

र्णमितोन्यथा । असंकीर्णसङ्करप्रयुक्तव्यवहारयौगपद्यासम्भवदोषाभावात् । अतोन्यथासङ्कीर्णमितिशेषः । तेनतत्रेच्छा
क्रमेणव्यवहारक्रमइतिभावः । सङ्करादनुत्तरत्वेप्रागुक्तियुक्तिरनेनसूचिता । अतएवमिथ्योत्तरकारणास्यानामेकत्र
चेदुभे । सत्यंवापिसहान्येनतत्रग्राह्यंकिमुत्तरमित्युक्त्वातदुक्तंहारीतेन । उदाहरणंतुयथानेनसुवर्णरूपकशतंवस्त्राणिच
गृहीत्वाऽयंअप्रयच्छतीत्यभियोगेसुवर्णरूपकशतञ्चनगृहीतंवस्त्राणिगृहीतानिप्रतिदत्तानीत्युत्तरेऽत्रमिथ्योत्तरस्यप्रभूतार्थवि
षयत्वात्तदुपादायक्रियार्थिनःप्रथमंव्यवहारोद्रष्टव्यः । पश्चाद्वस्त्रविषयेकारणोत्तरमादायप्रत्यर्थिक्रियाऽवलंबनेनव्यवहारः
। एवंमिथ्याप्राङ्न्यायसङ्करेपिबोध्यं । सम्प्रतिपत्तिर्यदिसुवर्णादौतत्रक्रियाफलाभावादल्पविषयमप्युत्तरोत्तरमादायैवव्यवहा
रोभवति । एवंतुल्यार्थविषयत्वेप्युत्तरयोर्यत्रप्रथमदृष्टेफलन्तदुत्तरावलम्बनेनव्यवहारोद्रष्टव्यः । तथाचोक्तं । यत्रवास्याक्रि
याफलमिति । अहंपूर्वंकथायानावर्थिप्रत्यर्थिनौयदा । वादोवर्णानुपूर्व्यासग्राह्यःपीडामवेक्ष्यचेतिबृहस्पतिः । अत्रवाचस्प
तिमिश्राः । भिन्नभिन्नावच्छेदेनकारणादिसंसर्गिसङ्करादनुत्तरमिति । पक्षैकदेशेयत्सत्यमिथ्यादिवाक्यार्थएवनसम्भवति ।
अवच्छेदभेदेनसांकर्य्यस्यैवाभावात् । किन्तुपक्षस्यैकदेशेविषयेयदुत्तरंसङ्कीर्ण्यंतेनतदनुत्तरं । शेषमेकदेशपदद्वयमनुवा
दः यथाशतन्नगृहीतंगृहीतमपिपरिशोधितंवानधारयाम्येवेत्यादि । यत्तु । शताभियोगेपञ्चशतंपरिशोधिताःपञ्चविंशतिस्तुनै
वगृहीताः । पञ्चविंशतिस्तुधार्य्यन्तेदेयाइत्युत्तरं । यच्चवस्तुभेदेनप्रागुदाहृतमत्तत्रयत्प्रभूतार्थविषयमितिवचनात् । कारणो
त्तरमादायप्रथमंविचारःकार्यः । पश्चात्तुपञ्चविंशतिरपह्नुतार्थिप्रमाणेनवासाध्याःप्रत्यर्थिप्रमाणेनवासाध्याः । नचैवन्नचैक
स्मिन्निर्णयेतद्वचनविरोधः । न्यायमूलकत्वेनैतद्वचनस्यलब्धार्थप्रमाणापरिग्रहाबाधकत्वात् । सतिचनिर्णयप्रमाणेतदंशसंश
यस्यावश्यनिरस्यत्वात् । नचयत्प्रभूतार्थविषयमित्येतद्वचनबलादेवलब्धार्थप्रमाणग्राह्यता । तथासत्येतत्स्मृतीनांश्रुतिमूलक
तापत्तेःनचेष्टापत्तिः । असम्भवंमूलान्तरत्वस्यैवश्रुतिमूलकत्वप्रयोजकत्वात् । यूपहस्त्यादिस्मृतौतथासिद्धान्तवचनात् । अ

अचन्यायमूलकत्वस्यैवासम्भवात्। नचतादृशविषयासम्भव एव नचैकस्मिन्निति वचनस्यमूलमितियुक्तम्। वक्तुर्दोषविषयद र्शनात्। नचेदृशमुत्तरंनदेयमित्युपदेशार्थमिदम्। यथावस्थितार्थकथनस्यनिषेद्धुमशक्तेः। विज्ञाएवविवदन्तेनत्वज्ञाइ त्यपिवक्तुमशक्यम्। नचातएव तेपर्य्यनुयोज्याः। छलंनिरस्यभूतेभ्यः व्यवहारान्नयेन्नृपइतिवचनात्तादृशामपितन्मतेबोध्यत्वा त्। नचवचनादेवास्योत्तरस्यहेयता। वचनस्यादृष्टार्थतापत्तेः। अपिच। श्रुतन्नगृहीतमित्यस्यन ग्रहणमात्रमर्थः। श्रुतप दानर्थक्यप्रसङ्गात्। नापिश्रुताग्रहणं। विशेषनिषेधेशेषाभ्यनुज्ञापत्तेः। नापिश्रुतपदम्पक्षप्राप्तानुवादः। एवंसत्येकदे शस्यगृहीतत्वविभावनादेवस्थापकोनिह्नुतेलिखितेनैकमितिवचनादेतावद्वचनान्निरपवादमेवलभेतेत्यनिष्टापादकमेवेदमुत्त रंस्यात्। मिथ्याकारणयोर्वापीत्यादिवचनमप्येवन्नेयम्। तस्माद्यावत्प्रकृतविषयः संशयोनुवर्त्ततेतन्निर्णायकञ्चप्रमाणंलभ्यते तावद्विचारणीयमितिपरमार्थः। भवदेवप्रदीपादयोप्येवम्। तस्मादस्मदुक्तमेवपक्षैकदेशेयत्साध्यमित्यादेरर्थमिति। त देतद्वागाडंवरमात्रार्थक्षोदक्षमम्। तथाहि। तिमाक्षरादुक्तरीत्यादृष्टार्थतयैवसकलवचनस्वरसाभङ्गसम्भवात्। नचै कस्मिन्नित्यादिवचनपर्य्यालोचनयायुगपदनुत्तरत्वस्यैवास्यवर्णितत्वात्। क्रमिकान्तरत्वस्यसर्वैरपीष्टत्वात्। नचायौगपद्य मेवनिर्वीजम्। युगपद्व्यवहारासम्भवस्यैतादृशविषयेउपपादितत्वात्। व्यवहारस्यचतुष्पात्त्वात्। क्रियारूपपादभेदेसा ध्यभेदेनभाषारूपपादभेदेचानद्धढितव्यवहारभेदप्रसङ्गस्यसचेतसादुरपह्नवत्वात्। किञ्चभवदुक्तरीत्यान्यायाभासमूलक तयानचैकस्मिन्नित्यादेरप्रमाण्यप्रसङ्गः। यच्चैकदेशपदस्यैकविषयपरत्ववर्णनमेकदेशपदद्वयस्यचानुवादत्वप्रतिपादन न्तदतिमन्दम्। एकदेशपदेरूढित्यागप्रसङ्गात्। सम्भवत्यस्मदर्थेनार्थवत्वेनिरर्थकानुवादस्यानर्थक्यापरपर्य्यायस्याभ्युप गमानौचित्याच्च। यच्चैकविषयसङ्करउदाहृतन्तदपिसन्दिग्धादिदोषसङ्कीर्णमसाधारण्येनैतद्वचनविषयतानर्हमितिस मस्तवचनानर्थक्यं। यदप्युक्तं। असम्भवंमूलान्तरत्वस्यश्रुतिमूलकत्वंप्रयोजकत्वमिति। तदपिमीमांसानध्ययननिवन्धनम्।

नह्यसम्भवमूलकत्वमष्टकादिस्मृतीनां श्रुतिमूलकत्वे प्रयोजकम्। तथा सति तुलापुरुषादिस्मृतीनां लोभादिमूलकत्वस्य सुतरां सम्भवाच्छ्रुतिमूलकत्वाभावप्रसङ्गः। यथाहुर्वार्त्तिककाराः। रागद्वेषमदोन्मादप्रमादालस्यलुब्धता। कथानोत्प्रेक्षितुं शक्याः स्मृत्यप्रामाण्यहेतवः इति। यूपहस्त्यादिस्मृतीषु मुक्तकत्वेनाप्तप्रणीतत्वानवधारणान्मूलभूतश्रुत्यकल्पनं कर्तृसामान्याभावादिति। भाष्याभिमताप्रामाण्ये मूलयुक्तिः। हेतुदर्शनन्तदुपष्टम्भकमन्वाचयमात्रमिति तन्त्रैव व्याचक्षाणमाकरे। वार्त्तिककारणानुदृढतरवैदिकपरिग्रहीतप्रामाण्यमेव तासामभिमतमित्यपि तदभियोगभाजां न दुर्लभम्। यद्यप्यपि वेत्याद्यसम्भवदुक्तिकस्वकपोलकल्पितविकल्पजालमुञ्जाव्यखण्डितत्वादपि प्रस्तुतप्रतीपम्। तादृशोत्तरस्य सर्वैरभ्युपगन्तव्यत्वात्। श्रुतग्रहणाभावस्य तदर्थस्यादुष्टत्वाच्च। अयमत्र सकलवचनसन्दर्भसमाधानान्निष्कृष्टोऽर्थः। क्रियालिखितादिप्रमाणरूपाप्रत्यवस्कन्दने प्राङ्न्याये च प्रत्यर्थिन एव भवति। मिथ्योत्तरे चार्थिन एव। सम्प्रतिपत्तौ न कस्यापीति व्युत्पादयिष्यते। एवञ्च सत्येन यत्रेतरेषां त्रयाणामुत्तराणां सङ्करस्तत्र प्रत्यर्थिनः कारणप्राङ्न्यायसाधनाय प्रमाणद्वयमर्थिनश्च स्वसाध्यसाधनायैकम्प्रमाणम्प्राप्नोति यत्र कारणप्राङ्न्याययोस्तत्र प्रत्यर्थिनः प्रमाणद्वयम्। यत्र पुनर्मिथ्याकारणमिथ्याप्राङ्न्याययोर्वा तत्रार्थिप्रत्यर्थिनोरेकैकम्प्रमाणम्। न च यथाप्राप्तमेवमेवास्त्विति वाच्यम्। प्रमाणं हि साध्यसिध्यर्थं एकस्मिन्व्यवहारे चैकमेव साध्यमेकस्यैवोचितम्। तेन तत्र नोभयोः प्रमाणमेकस्य वा प्रमाणद्वयम्भवितुमर्हं। उभयोः साध्याभावादेकसाध्यस्य चैकेनैव प्रमाणेन सिद्धावितरवैयर्थ्यात्। तस्माद्युक्तमुक्तं सङ्करस्तदनुत्तरमिति। तथा च सर्वत्र पक्षव्यापकमेवोत्तरं देयं स्थापनीयञ्च। यत्र पुनः सर्वथा तथाविधमुत्तरं न लभ्यते किन्त्वेकैकांशव्यापकमनेकमेवोत्तरम्। तत्र नानोत्तरवशेन नाना प्रतिज्ञाः कृत्वा क्रमेणैकैकप्रतिज्ञायामेकैकोत्तरोपादानेन व्यवहारः प्रवर्त्तनीयोऽन्यथा तत्र निर्णयाभावप्रसङ्गं स चानुचितः। छलं निरस्येत्यादिवचनात्। सङ्करात्तुत्तरमिति हेतूपादानादुक्तविधया सङ्करे निराकृते स्यादेवोत्तरत्वमित्यभिप्रायः। एतदेव व्यतिरेकमुखेनोक्तम्। यत्प्रभूतार्थै

विषयंयच्चवास्यात्क्रियाफलम्। उत्तरन्त्वत्रतज्ज्ञेयमसङ्कीर्णमतोन्यथेति। अतोन्यथायौगपद्येसंकीर्णंस्यादितिप्रागेवव्या
ख्यातं। पक्षव्यापकानेकोत्तरविकल्पेतुनजातुचित्सङ्करावसरः। तस्मान्नक्कापिसङ्करेसदुत्तरत्वमिति॥●॥ अथक्रियापादः। त
त्रतदुपयोगिप्रत्याकलितम्प्रथमंनिरूप्यते। विज्ञानयोगिनानस्यव्यवहारपादत्वानभ्युपगमेपिक्रियादानोपयोगित्वाभ्युपगमा
त्। अन्यैस्तुव्यवहारपादत्वस्यैवस्वीकारात्। क्रियापादप्रागभावस्तूभयसंमतः। प्रत्याकलितन्नामसभ्यैरुत्तरयोरर्थिप्रत्यर्थि
भ्यांलेखितयोःक्रियोपन्यासनमन्वयोनयोर्मध्येकस्यस्यात्कार्यास्मिन्पदेक्रियास्याद्धीनपादौवानयोर्मध्येकइत्यादिःसभ्यप्राड्विवा
कस्यसभापतेः। सभ्यस्यप्राड्विवाकस्यवापरामर्श उच्यते। तथाचवृहस्पतिः। येतुतिष्ठन्तिकरणेतेषांसभ्यैर्विभावना। कल
यित्वोत्तरंसभ्यैर्दातव्यैकस्यवादिनः। करणेधर्माधिकरणे। येनतिष्ठन्तिवादिनःप्रतिवादिनस्तुतेषामुत्तरंमिथ्यादिचतुर्भेदं
कलयित्वाविचार्य्यएतदुत्तरेकस्यक्रियोपन्यासउचितइति। निर्धार्य्यविभाव्यतेसाध्यमनयेतिविभावनाक्रियाप्रमाणमिति
यावत्। एकस्यवादिनोर्थिप्रत्यर्थ्यन्यतरस्यसभ्यैर्दातव्या। उपन्यसनीयत्वेनाज्ञापयितव्येत्यर्थः॥ कात्यायनोपि। लिखिते
शोधितेसम्यक्सतिनिर्दोषउत्तरे। अर्थिप्रत्यर्थिनोर्वापिक्रियाकरणमिष्यते। क्रियाकरणंक्रियोपन्यासः। पुनर्वृहस्पतिः।
श्रुत्वापूर्वोत्तरंसभ्यैर्निर्दिष्टायस्यभावना। विभावयेत्प्रतिज्ञातंसोखिलंलिखितादिना। विभाव्यतेसाध्यतेसाध्यमनयेतिविभाव
नाक्रियैव। पूर्वोत्तरम्पूर्वपक्षमुत्तरञ्चेत्यर्थः। द्वंद्वैकवद्भावः। निर्दिष्टाब्रुहीत्युपदिष्टा। कस्मिन्नुत्तरेकस्यक्रियाक्रियारहि
तञ्चकिमुत्तरमित्यपेक्षयामाह। व्यासः। प्राङ्न्यायकारणोक्तौतुप्रत्यर्थीनिर्द्दिशेत्क्रियाम्। मिथ्योक्तौपूर्ववादीतुप्रतिपत्तौनसा
भवेत्। प्राङ्न्यायकारणोत्तरयोःप्राङ्न्यायेकारणेचसाधितेऽर्थीसाध्यस्यग्रहणस्यधारणासाधकत्वाद्युंधेसाधनम्प्रत्यर्थिनाभ्युप
गमाच्चेमितत्वेवसाध्यत्वाविर्भावात्तदुपन्यासकारिणएवप्रत्यर्थिनःप्रमाणोपन्यासस्तत्साधनायोचितः। अर्थिसम्बन्धविरहप्र
त्यर्थिसम्बन्धयोर्द्वयोरपितत्तैर्वानिर्णयात्। मिथ्योत्तरेतुवादिनःप्रमाणदुर्भिक्षंयदिप्रतिज्ञातेऽर्थेप्रमाणाभावादेवप्रत्यर्थ्यभि

मतेऽर्थिप्रतिज्ञातसाध्यहेत्वभावः सिध्यतीति तत्परिहाराय भावाभावयोर्भावस्यैव साध्यत्वौचित्यादर्थिन एव क्रिया । सम्प्रतिप
त्तौ तु नैकस्यापि साध्यमस्तीति निरर्थकत्वात्क्रियैव नास्तीत्यर्थः । बृहस्पतिः । प्रतिज्ञां भावयेद्वादी प्रत्यर्थी कारणं तथा । प्रा
ग्वृत्तवादिविजये जयपत्रेण भावयेदिति । प्राग्वृत्तं प्राङ्न्यायः प्रतिज्ञां प्रतिज्ञातार्थम् इदं च परिशेषान्मिथ्योत्तरविषयम् । जयप
त्रेणेति प्राङ्न्यायदर्शिप्रभृत्युपलक्षणम् । मनुः । अपह्नवेऽधमर्णस्य देहीत्युक्तस्य संसदि । अभियोक्ता दिशेद्देश्यं करणं वान्य
दुद्दिशेत् । दिशति कथयति यथादृष्टमर्थमिति देश्यः साक्षी । मेधातिथिस्तु । ऋणादिप्रयोगदेशवर्तिनः । साक्षिणो देश
शब्देन लक्ष्यन्त इत्याह । अन्यत्कारणम्प्रमाणं साक्षिभिन्नं लेख्यादि । मेधातिथिना तु करणं वा समुद्दिशेदिति पठित्वा क
रणशब्दः । प्रमाणसामान्यवाचकोऽपि गोबलीवर्दन्यायेन साक्षिभिन्नकरणमाचष्टे । पृथगुपादानात् । कारणं वा समुद्दिशे
दिति पाठेऽप्ययमेवार्थ इत्युक्तम् । यत्र मिथ्याप्रत्यवस्कन्दनयोः कात्स्नपक्षव्यापिताः । यथा कश्चिच्छृङ्गग्राहिकया कश्चिदभियुङ्क्ते म
दीयेयङ्गौरमुकस्मिन्काले नष्टास्य गृहे दृष्टा यतः । तत्राभियुक्त उत्तरयति मिथ्यैतत् । एतत्प्रदर्शितनाशकालात्प्रागेवास्मद्
गृहेऽवस्थितत्वादिति इदन्तावत्पक्षप्रतिक्षेपक्षमत्वमभित्यनुत्तरत्वानर्हम् । कारणोपन्यासात्तु शुद्धमिथ्योत्तरम् । एकदेशा
भ्युपगमाभावाच्चार्थिनालेखितोऽर्थ इत्यादि प्रागुक्तप्रत्यवस्कन्दनलक्षणं नास्कन्दति । साध्यभेदाय प्रतिज्ञाभेदापादकत्वाभावा
च्च न पक्षैकदेशे यत्तस्याभियुक्तसङ्करवद्युगपद्व्यवहारासम्भवकृतं युगपदनुत्तरम् । तस्मात्कारणमिथ्योत्तरमेवेदम् । अन्य
तरसाधनेनापि विवादपर्यवसानात् । अत्र मिथ्याक्रियापूर्ववाद इति वचनात्कारणे प्रतिवादिनीति वचनाच्चान्यतरस्य यथा
र्थक्रियोपन्यास इति भाति यद्यपि तथापि मिथ्याक्रियेत्यादेः शुद्धमिथ्याविषयत्वेनैतद्विषयत्वाभावात्कारणे प्रतिवादिनीति
वचनात् । प्रतिवादिन एवात्र क्रिया । न चास्यापि शुद्धप्रत्यवस्कन्दनविषयत्वादेतद्विषयत्वाभावप्रसङ्गेन कस्यापि क्रियाप्रा
प्तेरिति निर्णयप्रतिबन्ध एवेति वाच्यम् । यतः प्रसिद्धप्रत्यवस्कन्दनेऽपि यद्ग्रहणाद्यभ्युपगमेन प्रतिदानादिकारणोत्तरतैवास्या

सम्भाविनीति वाच्यम् । एकदेशाभ्युपगमस्य प्रायिकत्वात् । कारणोपन्यासस्यैवोत्तरान्तरासंकीर्णतया नञ्लक्षणत्वावश्यंभा
वात् । एवं कृत्स्नपक्षव्यापि सप्राङ्न्यायं मिथ्योत्तरमपि द्रष्टव्यम् । यथा प्राङ्न्यायेनाभियोग एव । यद्येवं प्रतिवदति मिथ्यैतत् । यतः
प्रागयमस्मिन्नभियोगे मया व्यवहारमार्गेण पराजित इति । अत्रापि प्राङ्न्यायकारणोक्तावित्यादि प्राक्प्रदर्शितवचनात्प्रत्य
र्थिन एव क्रियोपन्यासः । प्राङ्न्यायसिद्धौ प्रतिज्ञायाः प्रकटमेव मिथ्यात्वपर्यवसानात् स्वशुद्धप्राङ्न्यायविषयत्वासम्भवादेतादृ
शप्राङ्न्यायविषयतायाश्चावर्जनीयत्वात् । पक्षप्रतिक्षेपक्षमस्यास्य प्राग्वदेवानुत्तरत्वानर्हत्वात् । यत्र तु कारणप्राङ्न्याययोः
कृत्स्नपक्षव्यापितयैकोत्तरत्वं तत्र प्रत्यर्थिना प्राङ्न्याय एव साधनीयः । कारणसाधनस्य तदन्तर्भूतत्वात् । यथा रूपकशतम
नेन मामकं गृहीतमित्यभियुक्तः प्रतिवदति सत्यं गृहीतं प्रतिदत्तं चादिदानीमस्मै न धारयामि । अस्मिन्नेवार्थे प्रागमुनाहमभि
युक्तस्तत्राद्यव्यवहाररीत्यामुम्पराजितवानिति । इदानीं हीनपरिज्ञानोपायः । तत्र मनुः । बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्ग
तं नृणाम् । स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च । स्वरो विकृतो गद्गदत्वादिः । वर्णोप्यस्वाभाविकः कृष्णतादिः । इङ्गितं स्वे
दवेपथुरोमाञ्चादि । आकारो विकृतो भ्रुवक्रिमादिः । चक्षुः कातरम् । चेष्टितं वृथा स्थानात् स्थानान्तरगमनादि । याज्ञव
ल्क्यः । देशाद्देशान्तरं याति सृक्किणी परिलेढि च । ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च । परिशुष्यत्स्खलद्वाक्यो विरुद्धं ब
हु भाषते । वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि । स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः । अभियोगेऽथ साक्ष्ये वा दु
ष्टः स परिकीर्तितः । मनोवाक्कायकर्मभिर्यः स्वभावाद्विकृतिं गच्छेत न भयादिनिमित्तमसावभियोगे साक्ष्ये वा दुष्टः परिकीर्ति
तः । मनः प्रकृतिविकृतिरेव विविच्य दर्शयति । देशान्तरं याति न चैकत्रावतिष्ठते । सृक्किणी ओष्ठप्रान्तौ परिलेढि जिह्वया पुनः प
रिघट्टयतीति कर्मणो विकृतिः । अस्य ललाटं स्विद्यते स्वेदबिन्दुवृन्दाङ्कितं भवति । मुखं वैवर्ण्यं वर्णान्यत्वम्पाण्डुत्वकृष्णत्वादि ।
एति प्राप्नोतीति । कायस्य परिशुष्यन् स्खलद्वाक्यः । परिशुष्यत्वगद्गदं स्खलद्व्यस्तपदवर्णं वाक्यं यस्य सः । बहु अनुपयुक्तमपि

शब्दं पूर्वापरविरोधवद्भाषत इति वाचः ॥ परेङ्गिताद्यप्रतिवचनदानेन । चक्षुश्च परस्य प्रतिवीक्षणेन न पूजयति नाभिनन्दती
ति मनोविकृतेर्लिङ्गम् परकीयमनोविकृतेरप्रत्यक्षत्वात् । तथाचोष्ठौ निर्भुजति वक्त्रवर्त्मपर्यधोभावेन चालयतीति कायस्यैव
विकृतिः । मनुरेव । आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च । नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः । कात्यायनः । आका
रेङ्गितचेष्टाभिस्तस्य भावं विभावयेत् । प्रतिवादी भवेद्धीनः सोऽनुमानेन लक्ष्यते । कम्पः स्वेदोऽथ वैवर्ण्यमोष्ठशोषाभिमर्षणम् ।
भूलेखनं स्थानत्यागस्तिर्यगूर्ध्वनिरीक्षणम् ॥ स्वरभेदश्च दुष्टस्य चिह्नमाहुर्मनीषिणः । प्रतिवादीग्रहणेन परस्परप्रतिपक्ष
वादित्वादुभयोर्ग्रहणम् । अभिमर्षणञ्चिह्नयोष्ठप्रान्तावलेहनं द्वन्द्वैकवद्भावः । श्रीरामायणे । आकारश्छाद्यमानोऽपि न श
क्यो विनिगूहितुम् । बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम् । अनेन च पराजयसम्भावनामात्रं प्रतिपाद्यते न तस्य च फलं क्रिया
दिपरामर्शी सभ्यादीनामवधानेन व्यवहारस्यैव विचारः । न चैतावता पराजयनिश्चयः साध्यनिर्णयो वा नैसर्गिकनैमित्तिकवि
कारयोर्वैलक्षण्यस्य विवेकुमशक्यत्वात् । यद्यपि कोऽपि निपुणतममतिर्विवेक्तुं शक्नुयात्तथापि न पराजयनिमित्तमसाक्षित्वं निबन्ध
नं वा दण्डादिकार्यं सम्भवति । न हि निपुणाभिषङ्गाभियोगमूलकमरणनिश्चयेऽपि मृतकार्यमार्याः समाचरन्ति । योगीश्वरः ।
सन्दिग्धार्थं स्वतन्त्रो यः साधयेद्यश्च निष्पतेत् । न चाहूतो वदेत्किञ्चिद्धीनो दण्ड्यश्च स स्मृतः । सन्दिग्धमधमर्णादिभिरनभ्यु
पगतमेवार्थं यः स्वतन्त्रः । प्रमाणानिरपेक्ष एव साधयेदासेधादिना राजादिभ्योऽनिवेद्यैव तस्माज्जिघृक्षति तदुपरि दण्डाद्या
दयति वा स हीनो दण्ड्यश्च भवति । न परं प्रकृतार्थहानिमाप्नोति प्रत्युत स्वतन्त्र्यनिबन्धनं राजदण्डमपि दातुमर्हति । यश्च स्वय
मभ्युपेतं साधनेन वा साधितं याच्यमानो निष्पतेत् । पलायेत सोऽपि तथा दण्ड्यः । साधितं धनं च दाप्यः । यश्चाहूतोऽभियुक्तो राज्ञा
चाहूतः सदसि न किञ्चिद्वदति स प्रकृतार्थहानिं दण्डं च प्राप्नोति । प्रकरणात् दुष्टपरिज्ञानमेव माभूदिति दण्ड्यग्रहणं सन्द
ण्ड्योऽपि सोऽप्यर्थान्न हीयत इति स्वार्थान्न हीयत इत्यर्थाद्धीनत्वदर्शनादत्र तन्माभूदिति हीनग्रहणं नारदोऽपि । अन्यवादी क्रि

याद्द्वेषीनोपस्थातानिरुत्तरः। आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः॥ अन्यवादी तथा हीनः स एव विवृतवान्। पूर्ववादम्परित्यज्य योऽन्यमालम्बते पुनः। वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः॥ कात्यायनेनापि। आवेदयित्वा यदा कार्यं त्यजेदन्यद्वदेदसौ। अन्यपक्षाश्रयस्तेन ततो वादी स हीयते॥ यस्तु कश्चिदभियुञ्जनादिमेनमभियुञ्जत इत्येवं विरुद्धमभिदधाति सोऽप्यन्यवादी तथा हीन इत्याह स एव। न मयाभिलिखितं कार्यं समभियुञ्ज्य परं वदेत्। विब्रुवंश्च भवेदेवं हीनं तमपि निर्दिशेत्॥ तथा पत्रे विलिखितम्पूर्वपक्षमप्यन्यथा कुर्वन्नन्यवादी तथा हीन इत्याह स एव। लेखयित्वा तु यो वाक्यं न्यूनं वाभ्यधिकम्पुनः। वदेद्वादी स हीयेत नाभियोगं तु सोऽर्हति। अभियोगं पूर्वपक्षं नार्हति वादित्वयोग्यो न भवतीत्यर्थः। क्रियाद्वेषी योऽनुपस्थातुश्च हीनतायास्तेनैव विवरणं कृतम्। सभ्याश्च साक्षिणश्चैव क्रिया ज्ञेया मनीषिभिः। तां क्रियां द्वेष्टि यो मोहात्क्रियाद्वेषी स उच्यते॥ आह्वानादनुपस्थानात्सद्य एव स हीयते। निरुत्तरस्तथा हीनमप्याह स एव॥ ब्रूहीत्युक्तोऽपि न ब्रूयात्सद्यः स दण्डनमर्हति। द्वितीयेऽहनि दुर्बुद्धिर्विद्यात्तस्य पराजयम्। पराजयम्पराजयचिह्नं हीनताम्। अत एव हारीतः। सोपदेशं हरेत्कालमब्रुवंश्चापसंसदि। उक्त्वा वचो विब्रुवंश्च हीयमानस्य लक्षणम्। सोपदेशं सव्याजम्। यथाह कात्यायनः। व्याजेनैव तु यत्रासौ दीर्घकालमतिक्रमेत्। सोपदेशन्तु तद्विद्याद्वादहानिकरं स्मृतमिति। आहूतप्रपलायी। अभियोगपरिहारार्थमाह्वानबुद्ध्या प्रच्छन्नचारी। एतेषामुत्तरोत्तरस्य हीनता गुर्वीति ज्ञापयितुं हीनम्पञ्चविध इत्युक्तं न परिसंख्यार्थमन्येषामपि हीनत्वस्मरणात्। हीनत्वगुरुत्वज्ञापनन्तु दण्डगुरुत्वार्थं। तदुक्तं कात्यायनेन। अन्यवादी पणान्पञ्च क्रियाद्वेषी पणान्दश। नोपस्थाता दश द्वे च षोडशैव निरुत्तरः। आहूतप्रपलायी च पणान्दाप्यस्तु विंशतिम्। अन्योऽपि विशेष उक्तस्तेनैव। त्रिराहूतमनायातमाहूतप्रपलायिनम्। पञ्चरात्रमतिक्रान्तं निर्जयेत्तं महीपतिः। कात्यायनेनैव प्रकारान्तरेणापि हीनलक्षणः। आवितव्यवहाराणामेकं यत्प्रभेदयेत्। वादिनं चोभयेश्चैव हीनं तमपि निर्दिशेत्। आवितव्यवहाराणां सभ्यादीनां मध्ये एकमपि यः प्रभेदयेत्।

अन्यद्वारानुरोधाद्युत्पादनेनेत्यर्थः । बृहस्पतिरपि । भयंकुर्वीतभेदंवाभीषणंवानिरोधनम् । एतानिवादिनोयस्तुव्यवहारे
सहीयते । भयादीनिव्यस्तसमस्तानियेनकृतानिसहीयतइत्यर्थः । भयंकरोतिभीषणमन्यमुखेनभयोत्पादनमितिशेषः ।
मनुरपि । अदेश्यंयश्चदिशतिनिर्दिश्यापह्नुतेचयः । यश्चाधरोत्तरानर्थान्विगीतान्नावबुध्यते । अपदिश्यापदेश्यञ्चपुनर्यस्
त्वपधावति । सम्यक्प्रणिहितञ्चार्थंपृष्टःसन्नाभिनन्दति । असम्भाष्येसाक्षिभिश्चदेशेसम्भाषतेमिथः । निरुच्यमानम्प्र
श्नञ्चनेच्छेद्यश्चापिनिष्पतेत् । ब्रूहीत्युक्तश्चनब्रूयादुक्तञ्चनविभावयेत् । नचपूर्वापरंविद्यात्तस्मादर्थात्सहीयते । ज्ञातारः
सन्तिमेत्युक्त्वादिशेत्युक्तोदिशेन्नयः । धर्मस्थःकारणैरेतैर्हीनन्तमपिनिर्दिशेत् । अदेश्यमनुपयोगासभ्यत्वादिनानिर्देष्टानर्हं
दिशतिकथयतियः । यश्चकथितमपिनमयेदमुक्तमित्यपलपति । यश्चाधरोत्तरानर्थान्पूर्वापराभिहितान्विगीतान्विरुद्धां
स्त्वेननावबुध्यते । यश्चापदेशंव्याजंपीडादिकमपदिश्योक्त्वाव्यापधावतिअपसरतिसभातः । यश्चसम्यक्प्रणिहितंसम्य
क्प्रणिधानेनाकलितमपिपरोक्तमर्थंपृष्टःसन्नाभिनन्दतिअनुवादप्रत्युत्तरदानादिनानाद्रियन्ते । मेधातिथिस्त्वदेशमि
तिपठित्वाभाषावादिविरहितदेशभिन्नमसम्भावितंवादेशम् । यद्वाभियोक्तादिशेद्देशमित्यत्रैवदेशशब्देनसाक्षिणोव्याख्याय
साक्षिनिर्देशअकालेअसम्भावितःसाक्षिणोनिर्दिशतिव्याचख्यौ । यश्चज्ञातारःसाक्षिणोमदुक्तेऽर्थेसन्तीतिसभायामुक्त्वाकेते
वदेत्युक्तोनवदेत्तान् । अथमामांज्ञातारः । यथार्थवाद्यहमितिजानानाःसाक्षिण इतियावत् । द्वितीयैकवचनान्तस्यास्म
च्छब्दस्यद्वितीयायाइत्यनेनमांइत्यस्यमाइत्यादेशः । ननुमेइतिषष्ठ्यन्तमेतत् । खलर्थतृनमितितन्निषेधात् । तेनमेतिसन्धि
रपिसमाहितइतिमेधातिथिः । आचार्यास्तु । व्याकरणाधिकरणेसन्धिकरणमत्रापशब्दइतिपूर्वपक्षप्रसङ्गेनवदन्तःष
ष्ठ्यंततामेवास्यमन्यन्तेमेसन्तीतिसम्बन्धान्नतृतीयसम्बन्धप्रयुक्तषष्ठीप्रतिषेधावकाशइतितेषामभिसन्धिः । सन्तिज्ञातारइत्यु
क्तेतिकल्पतरुलिखितपाठस्त्वनाकरएवाचार्यमेधातिथिभ्यामधृतत्वादितिध्येयम् । सिद्धान्तेत्वाचार्याणांछान्दसत्वमसमा

संविद्व्यतिक्रमे यस्मात्तज्जयपत्रकमिति ॥ वसिष्ठे जयपत्रस्य लक्षणाभिधानपूर्वकं तस्य चातुर्विध्यमुक्तं । राज्ञः स्वहस्तसंयुक्तं स्वमुद्राचिह्नितं तथा । राजकीयं स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिमत् । शासनं प्रथमं ज्ञेयं जयपत्रं तथापरम् । आज्ञाप्रज्ञापनापत्रं राजकीयं चतुर्विधमिति ॥ ● ॥ आज्ञाप्रज्ञापनापत्रयोः स्वरूपमुक्तमनेनैव । सामन्तेष्वथ भृत्येषु राष्ट्रपालादिकेषु च । कार्यमादिश्यते येन तदाज्ञापत्रमुच्यते । ऋत्विक्पुरोहिताचार्यमान्येष्वभ्यर्चितेषु तु । कार्यं निवेद्यते येन पत्रं प्रज्ञापनाय तदिति ॥ ● ॥ लेख्यप्रयोजनमाह । मरीचिः । स्थावरे विक्रयाधाने विभागे दान एव च । लिखितेनाप्नुयात्सिद्धिमविसंवादमेव च ॥ सिद्धान्ते वाचिकोपाधिः स्थावरे यदुदाहृतः ॥ भूमिग्रहे च क्रीते च न लेख्यसिद्धिरिति क्रियेति । पूर्वलेख्ये कथञ्चन व्यवहाराक्षमतामुपगते तद्विषयमेवापरं लेख्यमयमर्थो नात्मर्षोपाभिलिखितादेयम् । मावनादौ तथाभूते लेख्यादिद्वारस्यान्यकारणीयमित्याह योगीश्वरः । देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा । भिन्ने दग्धे तथा छिन्ने लेख्यमन्यत्तु कारयेत् । सर्वैरेतैर्विशेषणैर्व्यवहाराक्षमताविवक्षिता । दुष्टं लिप्यक्षरपरिलोपेनावाचकतया वा यल्लेख्यं तत्तु दुर्लेख्यं । नष्टं सर्वथा नाशमुपगतं । उन्मृष्टं मसीदोषादिना मृदितलिप्यक्षरम् । यद्यपि दग्धमपि नष्टमेव तथापि कालान्तरक्षताशीर्णता नष्टपदेनात्र विवक्षिता । पत्राद्यन्तरकरणञ्चार्थिप्रत्यर्थिनोः परस्परसम्प्रतिपत्तौ । विमतौ तु देशान्तरस्थपत्रानयनाय कालो देयोऽध्यापेक्षया व्यवहारो वा प्रवर्तनीयः । दुर्लेख्यादौ तु सम्प्रतिपत्त्यभावेऽक्षरकारणमन्यथा व्यवहारदृष्टवृभिरेव व्यवसेयं साक्षिषु सत्सु तैरेव निर्णयः । तथा च नारदः । लेख्ये देशान्तरस्थे तु शीर्णे दुर्लिखिते हृते । सतस्तत्कालकरणमसतो दृष्टदर्शनमिति ॥ सतो विद्यमानस्य लेख्यस्यानयनाय कालकरणम् । असतस्तु नाशे दृष्टी । तद्विमापीत्यर्थः । द्रष्टारः साक्षिणस्तैर्दर्शनान्निर्णयः कार्यः । न च लेख्यं परिच्छेदैव प्रमाणीकरणीयमित्याह कात्यायनः । राजा क्रियां समाहूय यथान्यायं विचारयेत् । लेख्याचारेण लिखितं साक्ष्याचारेण साक्षिणः ॥ दर्पणस्थं यथा बिम्बमसत्सदिव दृश्यते । तथा लेख्यस्य बिम्बानि कुर्वन्ति कुटिला नराः । व्यासः । लेख्यमालेख्यवत्को

चित्कुर्वन्ति कुशला नराः । तस्मान्न लेख्यसामर्थ्यात् सिद्धिरैकान्तिकी मता । बृहस्पतिः । छायाविदो यथाकालं कुशलाः कूटका-
रकाः । कुर्वन्ति सदृशं लेख्यं तस्मात्तन्न विचारयेत् ॥ स्त्रीबालानां लिपिज्ञाः स्युर्वञ्चयन्ति स्वबान्धवाः । लेख्यं कृत्वा स्वनामाङ्कं ज्ञे-
यं युक्त्यागमैस्ततः ॥ कात्यायनः । साक्षिदोषाद्भवेद्दुष्टं पत्रं वै लेखकस्य च । धनिकस्यापि वै दोषात्तथा धारणिकस्य च ॥ दु-
ष्टैर्दुष्टं भवेल्लेख्यं शुद्धैः शुद्धं विनिर्दिशेत् । तत्पत्रमुपधादुष्टैः साक्षिलेखककारकैः ॥ उपधा वद्दुष्टान्तःकरणता ।
स एव । धनिकेन स्वहस्तेन लिखितं साक्षिवर्जितम् । भवेत्कूटकृतं चेत्तत्तत्त्वं हेतुभिर्विभावयेत् । देशाचारविरुद्धं यत्स-
न्दिग्धं क्रमवर्जितम् । कृतं स्वामिना यच्च साध्यहीनं च दुष्यति । नचेदित्यादेरयमर्थः । कर्णालिखनकर्माधनिका-
धमर्णसम्प्रतिपत्त्या मयैतल्लिखितमिति यदि न विभावयेत्तदा तत्पत्रं कूटं भवेत् प्रामाण्यशङ्कास्पदं तत्स्यादिति । व्यासः । अ-
दृष्टश्रावितं लेख्यं प्रमीतधनिकर्णिकम् । अवन्ध्यलग्नकं चैव बहुकालं न सिध्यति ॥ एतदपवादमाह बृहस्पतिः । उन्मत्त-
जडबालानां राजभीतिप्रवासिनाम् । अप्रगल्भभयार्तानां न लेख्यं हानिमाप्नुयात् ॥ उन्मत्तादीनां लेख्यं तद्दर्शनादिना
विहानिं नाप्नुयादित्यर्थः । बृहस्पतिः । दूषितो गर्हितः साक्षी यत्रैकोऽपि निवेशितः । कूटलेख्यं तु तत्प्राहुर्लेखको वापि तद्विधः
। कात्यायनः । न लेखकेन लिखितं न दृष्टं साक्षिभिस्तथा । एवं प्रत्यर्थिनो लेख्यं कूटं लेख्यं प्रकीर्तितमिति ॥ कूटमप्रामाण्यशङ्का-
कलङ्कितमित्यर्थः । तस्माद्दुष्टलेख्यपरीक्षाऽवश्यापेक्षणीयेत्यभिप्रायः ॥ ० ॥ परीक्षाप्रकारमाह । कात्यायनः । त्रिविधस्या-
पि लेख्यस्य भ्रान्तिः सञ्जायते यदा । धनिसाक्षिलेखकानां हस्तो यत्नात् साधयेत्ततः ॥ स एव । अथ पञ्चत्वमापन्नो लेखकः सह सा-
क्षिभिः । तत्स्वहस्तादिभिस्तेषां विशुद्धिः स्यान्न संशयः ॥ यदा तु सह तत्सन्देहे जीवितो वामृतस्तथा । तत्स्वहस्तकृतैरन्यैश्च
स्तल्लेख्यनिर्णयः । याज्ञवल्क्यः । सन्दिग्धे लेख्यशुद्धिः स्यात् स्वहस्तलिखितादिभिः । युक्तिप्राप्तिक्रियाचिह्नसम्बन्धागमहेतुभिः
। एतद्देशकालयोरस्येदं द्रव्यं घटत इति युक्त्या प्राप्तिर्युक्तिप्राप्तिः क्रियासाक्ष्यादिभिः । चिह्नमसाधारणं यच्च श्रीकारादि

। सम्बन्धपूर्वमपि परस्परविश्वासकृतस्तयोर्दानग्रहणादिसम्बन्धः । आगमएतावताद्रव्यस्वामिन्देशेकालेस्यसम्भावितः
प्राप्त्युपायः । एतैर्हेतुभिर्हेतुरसाधारणोन्योगोवृषनयेन पृथगेववा । प्रतिवादिनालेख्यदोषउद्भाविते वादिनातत्पुत्रेणवातदु
द्धारःकरणीयइत्याह । वृहस्पतिः । उद्धरेल्लेख्यमाहर्तातत्पुत्रोभुक्तिमेवतु । अभियुक्तःसभीतश्चेत्तत्पुत्रोपितदुद्धरे
त् । यत्तुकात्यायनः । साक्षिलेखककर्तारःकूटतांयान्तितेयथा । तथादोषाःप्रवक्तव्यादुष्टैर्लेख्यम्प्रदुष्यति । आहर्ताभुक्तियु
क्तोपिलेख्यदोषान्विशोधयेत् । तत्सुतोभुक्तिदोषांस्तुलेख्यदोषानवाप्नुयात् ॥ तदनभियुक्तपितृमरणेवेदितव्यम् । दोषानु
द्धारेदण्डमाह । कात्यायनः । कूटोक्तौसाक्षिणांवाक्याल्लेखकस्यचपञ्चकम् । नयेच्छुद्धिन्नयेत्कूटं सदाप्योदममुत्तममि
ति । उत्तमंसाहसमितिशेषः । राजशासनेनिर्णयप्रकारमाह । प्रजापतिः । कार्योयत्नेनमहतानिर्णयोराजशासनात् । रा
ज्ञःस्वहस्ततोमुद्रालेखकाक्षरदर्शनात् । मुद्रालेखकाक्षरयोर्दर्शनान्निर्णयाद्राजस्वहस्तश्चनिर्णयइत्यर्थः । स्थावरविक्र
यवन्धकादौकूटत्वेनलेख्यंदूषयतोसाधयतश्चदोषंशारीरदण्डमाह । व्यासः ॥ स्थावरेविक्रियाधानेलेख्यंकूटङ्करोतियः ।
ससम्यग्भावितःकार्योजिह्वापाण्यंघ्रिवर्जितः । सम्यग्भावितःप्रमाणेनसल्लेख्यत्वमंगीकारितः । अनेनकूटलेख्यकर्तुर्न्नायन्द
ण्डःकिन्तुकूटत्वोद्भावनकर्तुरितिगम्यते । तथाचलेख्यंपरकीयंयःकूटङ्करोतिकूटमेतदितिवदतीत्यर्थः ॥ कूटलेख्यकर्तुस्तुद
ण्डान्तरंवक्ष्यते । ऋणादानादावपिलेख्यदोषोद्भावयितुस्तदसाधयतोविषयानुवधानुरोधेनदण्डःकल्प्यः । लेख्यप्राबल्य
मथाह । वृहस्पतिः । कुलश्रेणिगणादीनांयथाकालम्प्रदर्शयेत् । श्रावयेत्स्मारयेच्चैवयथास्याद्बलवत्तरम् । नारदः । ये
दर्शितम्प्रतिकालंयच्छ्रावितंस्मारितञ्चयत् । लेख्यंसिध्यतिसर्वत्रमृतेष्वपिहिसाक्षिषु ॥ कात्यायनः । दृष्टेपत्रेस्फुटन्दो
षन्नोक्तवान्नृणिकोयदि । ततोविंशतिवर्षाणिस्थितंपत्रंस्थिरम्भवेत् । ऋणिकग्रहणम्प्रतिवादिमात्रोपलक्षणम् । सएव । शक्त
स्यसन्निधावर्थीयस्यलेख्येनभुज्यते । विंशद्वर्षाण्यतिक्रान्तंतत्तत्पत्रन्दोषवर्जितम् । अथविंशतिवर्षाणिआधिर्भुक्तःसुनिश्चि

तः । तेनलेख्येनतद्विद्धिलेख्यदोषविवर्जिताः ॥ सीमाविवादेनिर्णीतेसीमापत्रंविधीयते । तस्यदोषाःप्रवक्ष्यामियावद्दूषेशि
विंशतिः ॥ प्राप्तंवातेनतेकिञ्चिद्देयंवायन्निरूपितम् । विनापिमुद्रयालेख्यंप्रमाणंमृतसाक्षिकम् ॥ अपिशब्दोमृतसाक्षिकमि
त्यत्राप्यन्वेति । व्यासः । स्वहस्तकाज्जानपदन्तस्मात्तुन्हपशासनम् । प्रमाणान्तरमिष्टंहिव्यवहारार्थमागतम् ॥ द्विध
लिपिज्ञःस्वहस्तेनमन्यल्लिख्येतयुक्तितः । कुर्य्याद्धिसदृशंलेख्यन्तस्माज्जानपदंशुभम् ॥ अप्रकाशात्साक्षियुक्तंलेखकाक्षरमु
द्रितम् । लोकप्रसिद्धंस्वहस्तादूरमन्यकृतंशुभम् ॥ देशाद्यक्षरादिलिखितन्तज्जानपदंस्मृतम् । समन्त्रासम्यक्पश्चिमंवातत्रस
ञ्जातंशुभम् ॥ संवर्तः । लेख्येलेख्यक्रियाप्रोक्तावाचिकेवाचिकीमता । वाचिकीतत्रविज्ञेयात्सालेख्यस्योपरियाक्रिया ॥ लेख्य
स्योपरियत्साक्ष्यङ्कूटन्तदभिधीयते ॥ अधर्मस्यहितद्द्वारंमनोःराजाविवर्जयेत् । वाचिकीयदिसामर्थ्यमक्षराणांविहन्यते
। क्रियाणांसर्वनाशःस्यादनवस्थाचजायते । अस्यार्थः । लेख्येसतिलेख्यक्रियाप्रोक्तासैवबलीयसीत्यर्थः । वाचिकेसाक्षिरू
पेप्रमाणेसतिवाचिकीक्रियासाक्षिरूपाक्रियासैवमताबलीयसी । लेख्यस्योपरियावाचिकीसाक्षिरूपाक्रियालेख्यानारूढेति
यावत् । नत्रसाविध्येन् । लेख्यस्योपरियत्साक्ष्यंलेख्यसाधकतयोपन्यस्तमित्यर्थः । अधर्मस्यचमद्द्वारमित्यत्रहेतुर्वाचिकी
ति । तत्रापिहेतुःक्रियाणामिति । तत्राप्युपपत्तिरनवस्थेति । प्रमादपरिहारमतियत्नेनकृत्वाहिप्रायशोलेख्यंभवतितेन
तत्राप्यप्रामाण्यशङ्कापिसाक्षिभिर्नोचिता । साक्ष्यादावपितत्सम्भवादितितात्पर्य्यम् । ननुसर्वथातत्रसाक्ष्यादिनिवर्त्तनमभि
प्रेतंलेख्यपरीक्षोपदेशविरोधात् । इतिसंस्थानिरूपणम् ॥ ० ॥ अनयोश्चसाक्षिलेख्ययोःशब्दाभिव्यञ्जकत्वाच्छब्दप्रमाणे
न्तर्भावः । तथाहि । यथोक्तगुणवत्त्वंदोषरहितानाञ्चसाक्षिणामाप्तवाक्यावश्यम्भावात् । आप्तवाक्यस्यचप्रामाण्यात् । तद्गु
णविशेषवत्त्वनिर्धारणायैवसाक्षिपरीक्षोपदेशः । आप्तवाक्यस्यचवक्तृज्ञानुमापकत्वेनस्वातन्त्र्येणाप्रामाण्यमित्यन्य
देतन्नलेख्यन्तुस्वस्वहितकारित्वेनसम्भिन्नासत्यात्तद्वचनाभिव्यञ्जकमित्याप्तवाक्यमेवतत्रापिप्रमाणम् । अतएवतत्रानाम

कश्चन तत्त्वशंकानिरासाय तन्मूलादेः सहितानभिज्ञानतयास्वस्मिन्नप्रत्यनाप्तत्वाच्छङ्कानिरासाय च लेख्यपरीक्षोपदेशोऽप्यर्थ
वान् ॥ ० ॥ अथ भुक्तिः । इयञ्च याज्ञवल्क्यादिभिरेकैव त्रिविधमानुषप्रमाणान्तर्गततयोक्ताः । प्रमाणं लिखितं भुक्तिः साक्षि
णश्चेति कीर्त्तितम् । एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥ इत्यादिवचनैः बृहस्पत्यादयः मानुषप्रमाणभेदतयोपन्यस्त
मप्युक्तं द्वैविध्यं भुक्तियुक्तिचोदनाऽप्रतिकाराख्यानवन्तः । साक्षी द्वादशभेदस्तु लिखितं दशधा स्मृतम् । अनुमानं त्रिधा भिन्नं
नवधा दैविकी क्रिया ॥ इत्युक्त्वा भुक्तियुक्तिचोदनाऽप्रतिकलान् बृहस्पतिर्विवृतवान् । तत्र युक्तिचोदनाऽप्रतिकारयोः प्रमाणान्त
रसहकारितयैव प्रमाणत्वं भुक्तेश्च वक्ष्यमाणविशेषणवत्याः स्वत्वहेत्वविनाभावात् स्वत्वानुमापकत्वं स्वत एवेत्यभिसन्धाय योगीश्वरा
दिभिर्भुक्तिरेव प्रमाणतयोक्ताऽन्यैस्तु यथाकथञ्चिदनुमापकतामभिसन्धाय युक्तिचोदनाऽप्रतिकारा अपि संगृहीता यानुमानत्वेनैव
सोक्तेति सौकर्याय त्रयमपि निरूपयामः । तत्र क्वचिदागमाया भुक्तेः प्रामाण्यमनभिसन्दधानः । सप्तस्थावरागमोपायान्प्रद
र्शयंस्तत्र भुक्तेः प्रामाण्यमाह बृहस्पतिः । एतद्विधानमाख्यातं साक्षिणां लिखितस्य च । साम्प्रतं स्थावरे प्राप्ते भुक्तेश्च विधिरुच्य
ते ॥ विद्यया क्रयबन्धेन शौर्यभार्यान्वयागतम् । सपिण्डस्याप्रजस्यांशं स्थावरं सप्तधा स्मृतम् ॥ पित्र्ये लब्धं क्रयाधाने रिक्थशौ
र्यप्रवेदनात् । प्राप्ते सप्तविधे भोगः सागमः सिद्धिमाप्नुयात् । स्थावरग्रहणमत्र भुक्तेरवश्यकत्वसूचनाय न तु तत्रैव भोगस्य
प्रामाण्यनियमाय जङ्गमेऽपि तत्सम्भवात् तदेतदुत्तरत्र विवेचयिष्यामः । विद्यया प्रतिग्रहादिकप्रयोजकतया स्वत्वोपायक्रयप्र
सिद्धः । बन्धो बन्धकं सोपाधिकं स्वत्वहेतुर्नष्टाधिविधौ चात्यन्तिकस्वत्वहेतुस्तदप्युत्तरत्र विवेचनीयम् । क्रयबन्धेनेति समाहार
द्वन्द्व एकत्वं । शौर्यागतं युद्धार्जितम् ॥ भार्यागतं विवाहकाले प्राप्तम् । अन्वयागतं पित्रादिक्रमोपात्तम् । अप्रजस्य सपिण्डस्यां
शं रिक्थहरान्तराभावे पिण्डदानाद्यधिकारितया प्राप्तं । पित्र्य इत्यादिना प्रागुक्तानेव सप्तस्थावरागमोपायाननूद्य तत्र भोगस्य प्रा
माण्यं विधीयते । तत्र प्रवेदनं विवाहः स एव । क्रमागतः शासनिकः क्रयाधानागमान्वितः । एवंविधस्तु यो भोगः स तु सिद्धिमवा

प्नुयात्। संविभागक्रयप्राप्तम्पितृलब्धञ्च राजतः। स्थावरं सिद्धिमाप्नोति भुक्त्या हानिमुपेक्षया। प्राप्तमात्रं येन भुक्तं स्वीकृत्याप
रिपन्थिनः। तस्य तत्सिद्धिमाप्नोति हानिश्चोपेक्षया तथा॥ अध्यासनसमारम्भभुक्तिर्यस्याविघातिनी। त्रिंशद्वर्षाण्यविच्छिन्ना तस्य
तां न विचालयेत्॥ अपरिपन्थिनं। विरोध्यप्रतिबद्धम्। अध्यासनात्परिग्रहात्। नारदः। आगमेन विशुद्धेन भोगो याति प्र
माणताम्। अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति॥ आगमस्याविशुद्धत्वं विरोध्यास्कन्दनं भवेत्। व्यासः। सागमो दीर्घ
कालश्चाविच्छेदोपरवोज्झितः। प्रत्यर्थिसन्निधानश्च परिभोगोपि पञ्चधा॥ विच्छेदोऽन्तरायः उपरवः आक्रोशस्ताभ्यामुज्झितो
रहितः। यद्वा छेदो व्यवधानं तद्विगमवान् विच्छेदो निरन्तर इति यावत्। अपरवो वर्जनविषयो रवः। मदीयं क्षेत्रादि त्वया कि
मिति भुज्यत इति प्रतिषेधः। अपशब्दस्य वर्जनार्थत्वात्। तेनोज्झितः। नारदः। संभोगं केवलं यस्तु कीर्त्तयेन्नागमं क्वचित्।
भोगच्छलापदेशेन विज्ञेयः स तु तस्करः। इदं सागमत्वविशेषणं तदनुपन्यासे दूषणञ्च स्मरणास्मरणयोग्यतायत्रागम
स्य तत्र काले वोद्धव्यम्। स च कालः शतवर्षावधिकः शतायुर्वै पुरुष इति श्रुतेरिति विज्ञानयोगिनः। पुत्रादिक्रमेणापि स्मर
णासम्भवाद्यावति काले स्मरणं तावानेव विवक्षितो स्मार्त्त इति तु वयम्। अनेनाभिप्रायेणाह स एव। स्मार्त्ते काले क्रिया भुक्तेः
सागमा भुक्तिरिष्यते। अस्मार्त्तेऽनुगमाभावात्क्रमात्त्रिपुरुषागतेति। भुक्तिः प्रमाणमिति शेषः। अनुगमः आगमाभावनिश्च
यः। कल्पतरुकारस्त्वनुगम आगमानुसंधानमिति व्याचख्यौ। तत्त्वागमाभावनिश्चयस्य बाधत्वेनानुमितिप्रतिबंधकस्याभाव
वचनस्यावश्यकत्वादागमानुसन्धानस्य च भोगेनैव क्रियमाणत्वेन तदभावासम्भवाच्च हेयम्। याज्ञवल्क्यः। आगमोभ्यधिको भो
गविना पूर्वक्रमागतात्। पूर्वेषां त्रयाणां क्रमेणागतो स्मार्त्तकाल इति यावत्। तस्माद्भोगाद्विनास्मार्त्तकालाद्भोगादागमो दानक्र
यादिरूपः स्वत्वहेतुरभ्यधिक उपजीव्यत्वात्। आगमं विना भोगमात्रात्स्वत्वानुत्पत्तेः। स्मरणयोग्ये च काले स्मार्त्तत्वास्मरण
रूपयायोग्यानुपलब्ध्या तदभावनिश्चये भोगेनागमानुमित्यसम्भवात्। अस्मार्त्ते तु तदभावनिश्चयाभावे निःप्रतिपक्षेणानैरन्त

र्ष्यादिविशेषणवताभोगेनस्वत्वहेत्वाक्षेपद्वारास्वत्वाक्षेपइतितात्पर्य्यम्। अनेनैवाभिसन्धिनाह। नारदः। अन्यायेनापिय द्भुक्तंपित्रापूर्वतरैस्त्रिभिः। नतच्छक्यमपाहर्तुंक्रमात्त्रिपुरुषागतम्। पूर्वतरैस्त्रिभिःसहपित्राभुक्तमन्यायेनापियदिकिमु तन्न्यायान्निश्चयेन तदपाहर्तुमशक्यमर्थिनासाध्यर्द्धनिराकोऽत्रत्वनिरन्तरोपभोगेसतितस्यनिरुत्तरत्वात्। अत्रचसर्ववचने षुत्रिपुरुषागतत्वम्भोगस्यस्मार्त्तकालीनत्वोपलक्षणंनतुयथाश्रुतंस्मरणयोग्येऽपिद्वितीयादिवर्षेरूपेकालेपुरुषत्रयान्ययस म्भवात्। तत्रचबाधेनानुमित्यर्थापत्त्योरनुदयात्। इदमेवाभिप्रेत्याह। व्यासः। पितापितामहोयस्यजीवेच्चप्रपिताम हः। त्रयाणांजीवताम्भोगोविज्ञेयस्त्वेकपूरुषः॥ पितामहेनयद्भुक्तन्तत्पुत्रेणविनाचतम्। तौविनायस्यपित्राचतस्यभो गस्त्रिपूरुषः। कात्यायनोऽपि। मुख्यापैतामहीभुक्तिःपैतृकीचापिसंमता। त्रयोऽपिनैरवच्छिन्नास्थिराषष्ट्याब्दिकामता। व्या सएव। वर्षाणिविंशतिर्भुक्तास्वामिनाव्याहतासती। भुक्तिःसापौरुषीभूमेर्द्विगुणाचद्विपौरुषी। त्रिपौरुषीचत्रिगुणान तत्रान्वेष्यआगमः॥ भुक्ताभुक्तिःपाकम्पचतीतिवत्प्रत्ययानुग्रहायधातुरनुवादः। तत्रागमस्तादृशभोगेनैवाक्षिप्यते। आगमा भावनिश्चयेतुसर्वेणभोगोनिष्फलएव। अनागमंतुयोभुङ्क्तेबहून्यब्दशतान्यपि। चौरदण्डेनतम्पापन्दण्डयेत्पृथिवीपतिः। न चयोभुङ्क्तइत्येकवचनश्रवणादेकपुरुषोपभोगएवतद्दण्डविधानमनेकपुरुषोपभोगेतुभोगस्यप्राबल्यमितिवाच्यम्। द्वितीयापृ थिवीपतिःनचयोभुङ्क्तइत्यादावप्यागमाभावनिश्चयेभोगस्याप्रयोजकत्वात्। इदमेवाभिप्रेत्याहनारदः। आदौतुकारणन्दा तंमध्येभुक्तिस्तुसागमा। कारणम्भुक्तिरेवैकासन्ततायाचिरन्तनी। यदपिवचनंयद्विनागममत्यन्तम्भुक्तम्पूर्वैस्त्रिभिर्भवेत्। न तच्छक्यमपाहर्तुंक्रमात्त्रिपुरुषागतमिति। तदप्युत्पन्नमुपलभ्यमानंआगमंविनाआगमाभावनिश्चयाभावइतिव्याख्येयम्। न नुस्मार्त्तकालेआगमस्यभुक्तिविशेषणमसंबद्धम्। सिद्धंप्रमाणान्तरादागमेतेनैवस्वत्वसिद्धेर्भोगस्यविशेष्यांशस्यानुमाना र्थापत्त्योरनुपयोगात्। असिद्धेविशेषणासिद्धिरितिचेन्न। प्रमाणान्तरसिद्धागमसहितएवविशेषणान्तरविशिष्टोभोगः।

कालान्तरे स्वत्वमवगमयति भोगरहितोऽवगतोप्यागमः साक्ष्यादिभिन्न कालान्तरे स्वत्वमवगमयितुमाचष्टे मध्ये दानक्रयादि
नास्वत्वापगमसम्भवादिति विशेषणविशेष्ययोर्द्वयोरपि नानर्थक्यमसिद्धिर्वा इदमिदानीं मम स्वमिति साध्ये स्वत्वभागे आगमे
आगमस्तत्रतस्येदानीम्पर्यन्तमननुवृत्तो भोग इति निगर्वः। याज्ञवल्क्यादिभिः सर्वप्रकारकानुपभोगे पूर्णस्वत्वोत्पादकता
दानाद्यागमस्य नास्तीत्युक्तम्। आगमेपि बलं नैव भुक्तिः स्तोकापि यत्र नो। बलम्पूर्णता। नारदः। विद्यमानेपि लिखिते जीव
त्स्वपि हि साक्षिषु। विशेषतः स्थावराणां यन्न भुक्तं न तत्स्थिरम्। दानविक्रयादेरुपभोगनिरपेक्षस्यैव स्वत्वोत्पादकत्वात्किमि
ति भोगस्तत्रोप्यवश्यन्तत्रापेक्ष्यत इत्याशङ्कायामुपपत्तिरुक्ता विज्ञानेश्वराचार्यैः। दानादेः परस्वत्वापादनम्परकर्तृकस्वीका
रापेक्षावश्यम्भावनीयः स्वीकारश्च त्रिविधो मानसो वाचिकः कायिकः। ममेदमित्यध्यवसायो मानसः। ममेदमित्याद्यभिला
पो वाचिकः। उपादानाभिमर्शनादिरूपेणानेकप्रकारकः कायिकः। तत्र मानसं विना स्वत्वासम्भवात्तदावश्यक एव। दा
नविशेषपुरस्कारेण शब्दप्रयोगविशेषनियममपाददर्शनादिचेष्टाविशेषनियमाच्च वाचिककायिकावप्यावश्यकावित्यव
सीयते तत्र हिरण्यवस्त्रादौ दातृकर्तृकजलत्यागादनन्तरमेव प्रतिग्रहीतुरुपादानादिसम्भवात्त्रिविधोपि व्यापारः सम्पद्य
ते। क्षेत्रादौ तु फलोपभोगं विना कायिकस्वीकारासम्भवात्स्वल्पेनाप्युपभोगेनावश्यम्भवितव्यमन्यथा दानक्रयादेः सम्पूर्णता न
भवत्युत्तरकालीकाराभावात्। तेन तत्स्वहितादागमान्तराद्विकल आगमो दुर्बलो भवति। एतच्च द्वयोरागमयोः पूर्वापरभावान
वगमे न त्ववगमे तु स्वल्पभोगविकलोपि प्राक्तन एवागमो बलवान्। पूर्वेणादानादिना स्वत्वागमे दानाद्युत्तरासम्भवात्। न चैव
न्तस्य क्षेत्रादेर्मध्यकृत्वापत्तिः। पूर्वस्याप्यागमादुत्तरस्याम्यानुत्तरश्चेति वाच्यम्। प्रतिश्रुतन्यायेनावेक्षणीयस्वत्वस्य स्वस्थान्तु
पूर्वस्वाम्यसत्वेपि तदैव प्रतिगृहीत्रादेः कायिकस्वीकारस्यानिः प्रतिपक्षस्य सम्पादनीयत्वात्। अथवा साक्षादेवानेन योगीश्व
र वचनेन साक्ष्यादीनामुक्तानां मानुषप्रमाणानां बलाबलमुच्यते। पूर्वव्याख्याने वार्थिकम्। द्वितीयव्याख्याने चेत्थम्। आद्ये

पुरुषेसाक्षिलेख्याभ्यांविगतस्यागमेभोगादभ्यधिकोऽवलम्बनात्। तेनभुक्तितःसाक्षिलेख्ययोस्तत्रबलवत्त्वमुक्तम्भवति। पूर्वकमाग
तस्तुभोगोविनापिभावितादागमाच्चतुर्थेवर्षेपुरुषेऽधिकोमध्यमेतुपुरुषेभोगरहितादागमात्स्तोकभोगसहितोप्यागमोबल
वानितिस्पष्टच्छेदमादौतुकारस्थन्दानमित्युदाहृतेनारदवाक्ये। प्रथमपुरुषेपिस्वाम्यनुपभोगेनसमक्षनिराक्रोशपरोपभो
गेनक्षेत्रादिभूमेर्हिरण्यादेस्थावरस्यचचिरकालेनस्वाम्यहानिःपूर्वस्वामिनआह। याज्ञवल्क्यः। पश्यतोब्रुवतोभूमेर्हानिर्विं
शतिवार्षिकी। परेणभुज्यमानस्यधनस्यदशवार्षिकी। मनुनारदौ॥ यत्किञ्चिद्दशवर्षाणिसन्निधौप्रेक्ष्यतेधनी। भुज्य
मानम्परैरर्थंनसतंलब्धुमर्हति। व्यासः॥ उपेक्षितायथाधेनुर्विनापालेननश्यति। पश्यतोऽन्यैस्तथाभुक्ताभूमिःकालेनही
यते। वर्षाणिविंशतिर्यस्यभूर्भुक्तातुपरैरिह। सतिराज्ञिसमर्थस्यतस्यसेहनसिध्यति। नारदः। भुज्यमानान्परैरर्थान्य
स्तान्मोहादुपेक्षते। समक्षञ्जीवतोयस्यतान्भुक्तिःकुरुतेवशम्। पश्यतोब्रुवतइत्यादिवस्यनादरे। बृहस्पतिः। [illegible]भि
र्वापरैर्द्रव्यंसमक्षंयस्यदीयते। अन्यस्यभुञ्जतःपश्चान्नसतल्लब्धुमर्हति। पश्यतोऽन्यस्यददतःक्षितिंयोननिवारयेत्। सतापि
लेख्येनभुक्तंनपुनस्तांसमाप्नुयात्। एतेषुवचनेषुविंशतिवर्षावधिकस्वामिसमक्षनिराक्षेपभोगनिबन्धनाभूमेर्हानिर्दशव
र्षावधिकतादृशपरोपभोगनिबन्धनाचहिरण्यादिधनस्यहानिरित्यर्थःप्रतीयतेसाननावत्स्वत्वहानिःदर्शनकालीनप्रतिषे
धदानादिवत्स्वत्वनिवर्त्तकत्वस्यलोकाप्रसिद्धत्वात्उपभोगस्यचतादृशस्यस्वम्प्रतिप्रमाणत्वेनप्रमाणस्यप्रमेयप्रतिज्ञापकत्वेन
स्वत्वरूपाजनकतयास्वत्वोत्पादकत्वाभावात्स्वत्वस्यतदुत्पत्तिनिवृत्तिहेतूनाञ्च। लौकिकत्वस्यदायभागप्रस्तावेविस्तरेणो
पपादयिष्यमाणत्वात्। गौतमादिभिस्तदुभयकथनस्यलोकप्रसिद्धानुवादात्। अनागमभोगस्यनारदवचनेनपूर्वोदाहृ
तेनानागमन्त्वित्यादिनास्वत्वहेतुतायानिरस्तत्वाच्च। अत्राहापरार्कः। व्यवहारस्थितिमाश्रित्येदमुच्यतेनधर्मगतिमितिप
रस्वापरस्वापहाप्रत्यवायभीरुणापरेणपूर्वस्वामिनेतदर्पणीयंसभापतिसभ्यादीनांव्यवहाररीत्याततस्याच्छिद्यनदद्यानेपि

नक्षतिः । अत एव मनुः । अजडश्चेदपोगण्डो विषये चास्य भुज्यते । भग्नं तद्व्यवहारेण भोक्ता तद्द्रव्यमर्हतीति । व्यवहारेण
भोक्तार्हतीति व्यवहारस्थितिमेवोक्तवान् । बृहस्पतिरपि सतापि लेख्येनेत्याह । अनागममित्यादिनारदवचनमस्तु तत्र ध
नभूमिविषयमेकपुरुषनियमाभावनिरस्थयं वा । अत एव योगीश्वर आगमस्तु कृतो येनेत्युक्तवान् । तस्मान्निह्नुते लिखितमित्या
दिवचने यथा यथापेक्षितं तर्कसहकृतैकदेशसाधनेनैकदेशापादानेऽनिर्वर्तितैकदेशापादानेऽनिवेदितैकदेशस्य प्रागनि
वेदितस्यापादानेऽपि व्यवहारदर्शिनां दोषस्तथाप्यपीनितद्युक्तम् । कुलं निरस्येत्यादिना व्यवहारदर्शनानपेक्षतादृशविषयस्यै
घयावर्जनीयत्वात् । निह्नुत इत्यादिवचनं सम्पर्काभावाच्च अस्मादुपपादनरीत्या न चापि तथानभ्युपगमाच्च तत्र प्रायश्चित्तं विशेष
परीभाषाप्रभाप्रस्तावे । एवंविधा हि भुक्तिस्तु स्वीभूतस्य पश्यतः स्वामित्वे सति न घटते किन्तु भोक्तुरेव स्वामित्वे सति युज्यत इति
भवति न च भुक्तिः प्रमाणमिति पूर्वं स्वयमेव स्वामिस्वत्वहानिपरत्वे सत्त्वोत्पत्तिपरत्वव्याख्यानेनास्य विरोधाच्च । न च तद्ग्रन्थेन तदनुग्राह
कतर्कप्रदर्शनेन व्यवहारस्थितिपरमेव न वस्तुगतिपरं व्यवहारहानिश्च । भोक्ता यद्येवमुपन्यस्यति अजडोऽयमपोगण्डोऽयमे
तत्समक्षं मया भुज्यमानं क्षेत्रादि यद्येतद्धायमनेन कुतो विंशतिवर्षावधि न प्रतिषिद्धं अस्मिंश्च धर्मगुणोपेता बहवः साक्षिणः स
न्तीति तयोपन्यस्तेऽचायं निरुत्तरो वश्यम्भवतीत्येवमिति वाच्यम् । अस्य सन्तर्कत्वाभावात् आगमप्रमाणानुपन्यासेन मूलशैथि
ल्यात् । उपेक्षाहेतुभाववक्ततत्र व्यवहारहानावपि वस्त्वनुसरणस्यावश्यकत्वात् । तथा च नारद उपेक्षाविज्ञाभाववक्तामेव व्यव
हारहानिमाह न वस्त्वभाववक्तताम् । उपेक्षां कुर्वतस्तस्य तूष्णीम्भूतस्य तिष्ठतः । काले विपन्ने पूर्वोक्ते व्यवहारो न सिध्यतीति । न च
निरुत्तरताप्रयुक्तव्यवहारहानिशङ्कानिरासाय प्रत्यक्षं स्तोये वस्तुनि परेण भुज्यमाने तूष्णीं न स्थेयमित्युपदेशार्थमिदं वचनं हीना
दिलक्षणवदिति वाच्यम् । विंशत्यादिग्रहणस्यैवमानर्थक्यप्रसङ्गात् । ततोऽर्वागपि व्यवहारनिःशङ्कायास्तुल्यत्वात् । लेख्यदो
षोद्भावनमुत्तरकालेन कायन्ततोऽर्वाक्कार्यमित्येतदर्थं तद्ग्रहणमिति चेन्न । आध्यादिष्वपि विंशत्याद्युत्तरकाले तदनुद्भाव

नस्यतुल्यतयैतदपवादत्वेनोत्तरवाक्यासंगतोस्तच्चलेख्यप्रस्तावेभिहितम्। अत्र मिताक्षराकाराः। नवस्तुहानिर्नव्यवहारहानि
रनेनवचनेनप्रतिपाद्यते। किन्तु परकृतसमक्षभोगेऽप्रतिषेधलक्षणस्यापराधप्रयुक्ताक्षेत्राद्युत्पन्ननष्टफलानिविद्यमानफ
लेपितदीयस्वत्वानपगमात्परस्वत्वानुत्पादाच्चन्यायतस्तद्वस्तुविद्यमानफलसहितमेवलभतेयद्यपिस्वामीतथापिनष्टेफले
धर्म्मिनाशादेवस्वत्वापगमान्निष्क्रयद्वारेणचौरादिवभोक्तुःसकाशात्तद्ग्रहणप्राप्तमुपेक्षारूपापराधान्नभवतिपरस्वोपभोगलक्ष
णापराधनिबन्धनोराजदण्डस्तुनवादाद्भोक्तुर्भवत्येव। अनागमन्त्वेत्यादिनारदवचनात्। परोक्षभोगेसापेक्षासमक्षभोगेचन
ष्टमपिफलन्निष्क्रयरूपेणस्वामिलभतएव। पश्यतोब्रुवतइतिवचनात्। विंशतिवर्षेभ्योभूमेर्दशवर्षेभ्यश्चप्राग्धनस्यनष्ट
मपिफलन्तन्निःक्रयरूपेणप्राप्नोति। विंशतिदशशब्दोपादानादितिचेदेवंवक्तव्यम्। नष्टफलालाभेप्रतिषेधरूपापराधएव
बीजंवचनस्वारस्याद्युः। विंशत्यादिवर्षोपभोगवत्ततःप्रागपिसमक्षभोगेऽप्रतिषेधापराधस्यतुल्यत्वात्तत्कृतनष्टफलालाभप्रसक्ते
विंशत्यादिग्रहणाविवक्षाप्रसङ्गदोषसाम्यात्। तत्परिहारायप्राचनिकत्वंयदिनष्टफलालाभस्यतर्हि यथाश्रुतभूम्यादिस्वत्वहा
निरेववचनार्थोस्तु। किन्नष्टफलपरतयाव्याख्यानक्लेशातएवकल्पतरुरत्नाकरस्मृतितत्त्वस्मृतिचन्द्रिकाकरादिभिर्वचनस्व
रसायातएवार्थोभ्युपगतः। अत्रब्रूमः। यावताविनावचनमनुपपन्नंतावदेववचनमस्तकेकल्प्यमतएवयथाश्रुतार्थग्रहणेसम
क्षभोगापेक्षायांस्वत्वनाशकत्वमुपभोगस्यपरकृतस्यतत्कालीनस्यस्वत्वोत्पादकत्वमलौकिकवचनान्तरविरुद्धञ्चकल्प्यमस्मा
न्मतेतुनष्टफलेधर्म्मिनाशात्स्वत्वनाशःक्लृप्तएवपरस्वोपभोगेचौरादिवन्निःक्रियरूपेणतत्प्रत्यर्पणमपिलोकप्रसिद्धत्वात्प्र
सक्तांविंशतिवर्षादूर्ध्वन्तरमपराधविशेषात्स्वामिनस्तल्लाभमुखेनप्रतिषिध्यतेपरमस्यचास्यदण्डः। इतरथावैवचनान्तरविरुद्ध
मेवेति। भवदेवस्तु। किमयंविंशतिवर्षाद्यवच्छिन्नाप्रतिरोधभोगोवचनाद्यतोभोक्तुःस्वत्वंजनयतिप्रमापयतिवा। नाद्यःयाग
नादिवदस्यस्वत्वजनकत्वस्यलोकशास्त्रयोरप्रतीतत्वात्। नापिद्वितीयः। विंशतितयाव्याप्रमापर्यकत्वमनुपपन्नतया वा। तद्वयस्य

पिर्दृष्टभोगस्य स्वत्वेन सह कुत्रापि व्याप्तेरगृहीतत्वात् । अत एव न तस्य स्वत्वेन विनानुपपत्तिरपि । तस्याश्चापि व्याप्यकार्योपजी
वितत्वात् । किञ्चानेन प्रापितस्वत्वस्य स्वत एव प्रमाणमागमानुमानद्वारा तन्निरपेक्षतया वा । न तावत्प्रथमः स्मार्तकालीनस्यागमा
भावनिश्चयेन तदनुमापकत्वस्य बाधेनासम्भवात् । प्रमाणान्तरेणागमनिश्चयेऽस्यासिद्धसाधनेनानुमापकत्वाक्षेपकत्वयोरसंभ
वात् । न द्वितीयः । व्यभिचाराच्च । अन्यायेनापि यद्भुक्तमिति वचनविरोधाच्च स्वस्यान्यायेन भोगासम्भवात् । किञ्चेयमनुपपन्न
तास्त्रीराजादिधनगोचरापि सम्भवतीति तत्र न कदाचिदपि भोगः प्रमाणमिति कुतः तस्मादेवं वाच्यम् । यद्यं यथोक्तो भोगः पू
र्वस्वामिनो भोक्तुरुद्देशेन त्यागात्स्वत्वध्वंसं समर्थापयति अनुमापयति वा न हि सम्भवति मत्स्वं जहाति । परभोगञ्चेद्दृष्ट्वा तस्मिन्वस्तुनि
क्षाम्यतीति । तथा च तदुद्देशेन त्यक्तत्परिग्रहादेव परस्य तत्र स्वत्वमप्युपपद्यते । यथा सर्वभूतोद्देशेन त्यक्तं तोयादीति नियमात्
तदपि भोक्तुः स्वी भवति । स्त्रीराजधनादौ तु नैवं । स्त्रीणामज्ञत्वादप्रागल्भ्याद्राजधनस्य बहुजनतया जाड्यादेरप्रागल्भ्याच्छ्रोत्रियस्य
बहुकालीनाध्यापनादिव्यग्रतया उपनिधिसीमादीनामाधित्वादित एव स्वत्वध्वंसजनकपूर्वस्वामित्यागाकल्पकत्वात् । अतो भू
म्यादौ विंशतिवार्षिके गवादौ दशवार्षिको भोगः पूर्वस्वामिनः स्वत्वध्वंसे च प्रमाणं यच्च कालवैषम्यं तद्भूम्यादेर्महाफलत्वेन तत्र चि
रकालेनैव स्वत्वहानिकल्पनस्योचितत्वाद्द्रव्यान्तराणाञ्चानित्यत्वात्स्वल्पकालेनापि स्वत्वहानिकल्पनाया उचितत्वादौचित्यासिद्धम्
। यच्च भूम्यादावेव कालवैषम्येण भोक्तुः स्वत्वजननं तदपि वचनादेव युक्तं यथा तदेव जन्म पुत्रस्य पितृधने स्वत्वजनकन्नतु पुत्र्याद्इ
ति च प्रदीपकृतः । यत्तु हि मत्कृत्ये इदानीं नाम फलसम्भावनात् अधुना तावत्पर एव भुङ्क्ताम् पश्चादेतत्सकाशात्सफलोपभोगं भुवंय
क्ष्यामीत्यभिसन्धाय भूम्यादिस्वामी तत्र परोपभोगं क्षमते तेन तत्रापि विंशत्याद्यधिको भोगोऽस्ति स्वामिनस्तदुद्देशेन त्यागश्च नास्ती
ति व्यभिचारान्न दृष्टभोगस्य पूर्वस्वामिस्वत्वत्यागे प्रामाण्यम् । तथा च सर्वस्वामिनास्वीयत्वाभावम्प्रतिज्ञाय द्विषड्वार्यन्तत्र च तद्
भुक्त्यागनिर्णये परिग्रहात्परस्य स्वत्वं निर्बाधमिति वाच्यम् । यतस्तथापि पूर्वभोगसिद्धस्य पूर्वस्वामिपरिग्रहस्य त्यागानवधारणका

धीनत्वेन भोक्तुः स्वत्वाजनकतया तद्वैयर्थ्यात्। किञ्च भूस्वामी सचेतनः किमिति वृथैव तत्र स्वत्वं जह्यात्। नह्यत्र दृष्टमुद्देश्यन्ना
प्यदृष्टं धर्मशास्त्रोक्तेतिकर्त्तव्यताविरहात्। महेच्छत्वसुशीलत्वदयालुत्वादिनापि न त्यागसम्भवः। सत्यजन्नपि तैरेव हेतुभिः
क्षमत इत्यस्यापि सम्भवात्। नापि यदुद्देशेन यत्त्यज्यते तत्तस्य स्वमिति नियमः। उद्देश्येनागृहीते व्यभिचारात्। अपि च। त्या
गाद्भोक्तुः स्वत्वं स्वरूपसतो ज्ञानाद्वा नाद्यः। अदृष्टचरत्वात्। द्वितीये च तज्ज्ञानम्भोक्तुः स्वामिवचनात्स्यात्तथा च त्वदुद्देशेन मये
दन्त्यक्तमिति स्वामिनस्तदभिसन्धिपूर्वकम्वचनं ज्ञापकं दानमेवेति तत एव स्वामिनः स्वत्वध्वंसे कृतमुपेक्षानुसरणेन न च यथोक्तक्षम
यैव त्यागानुमानं अन्यकृतेपि सौशील्यादीनां क्षमासम्भवात्। न चैवं यथोक्तक्षमया भोक्तुः स्वत्वानुमानमपि न स्यात्। पूर्वस्वामिनः स्व
त्वसत्त्वेपि सौशील्यादिना तस्य अन्यथासिद्धत्वादिति वाच्यम्। तावत्कालं सौशील्यादिना क्षमायाः असम्भवसहकृतो भोगो भुक्तुः स्व
त्वप्रमापक इति स्मृतिवचनबलादवगतम्। न च स्वत्वं पूर्वागमाद्वोत्पद्यते स्वामिनो भोक्त्रुद्देशेन तद्वस्तुत्यागाद्वेत्यत्र ततो ग्रह इति
। अत्र वदामः। प्रदीपकृद्भिर्यत्सिद्धान्तितं क्षमायास्तावत्कालीनायाः सौशील्यादिहेतुकत्वासम्भवेन सहकृतो भोगो भोक्तुः स्व
त्वं प्रमापयतीति तत्र भोक्तुः पूर्वागमाद्वोत्पन्नं भोक्त्रुद्देश्यकस्वामिकृतत्यागाद्वेत्यत्र ततो ग्रह इति तत्र प्रष्टव्यम्भोक्तुः स्वत्वोत्पादकौ
पूर्वागमस्वामिकृतभोक्त्रुद्देश्यकत्यागौ प्रमाप्य तावत्कालीनो भोगो भोक्तुः स्वत्वमनुपाययत्यप्रमाप्य वा नाद्यः। भोक्तुः पूर्वागमसिद्धौ
सम्प्रति तत्त्वस्वामिनः। स्वाम्यासम्भवेन तदीयाप्रतिरवविंशत्यादिवर्षकालीनभोगोपन्यासवैयर्थ्यात्। तेनैव तदनुमानान्न
द्वैयर्थ्यमिति चेत् न तत्र व्यभिचारेणानुमानासम्भवात्। भोक्त्रुद्देश्यकत्यागप्रमापणेपि तद्दूषणानपगमात्। न द्वितीयः पूर्वस्व
त्वध्वंसानवगमे भोगसहस्रेणापि स्मार्त्तकालीनेन भोक्तुः स्वत्वानुमानं वानुमानबाधात्। स्मार्त्तव्यास्मरणरूपयोग्यानुपलब्धेर्भोग
रूकत्वात्। यश्चात्र ततो ग्रह इत्यनास्वादः सोप्ययुक्तः पूर्वागमभोक्त्रुद्देश्यकस्वत्वत्यागयोः फलभेदेन तत्त्वनिर्णयफलकोनि
र्धारेन्यतरनिर्द्धारणस्यावश्यकत्वात्। पूर्वागमो हि यदि भोक्तुरेव सम्प्रति स्वामिनमन्यस्या भोक्तुर्मिथ्याभियोगनिबन्धनोद

गडोपि स्यान्न केवलम्भूधनहानिः । तस्य स्वत्वस्यागमसिद्धौ तदपलापदण्डमात्रं न मिथ्याभियोगित्वनिमित्तो द्विगुणो दण्डः स्वत्व
हानिरुभयपक्षे तुल्या विंशत्यादिग्रहणाविवक्षाप्रसक्तिश्चोभयपक्षेपि कक्षीकरणीया । भोक्तृपूर्वागमपूर्वस्वामिकर्तृकभोक्तु
र्हेश्यकत्यागस्य द्वित्रादिवर्षोपभोगस्यलेपि सिद्धौ भोक्तृस्वत्वस्यावारणीयत्वात् । भवदेव मताच्च भवन्मतस्य नातीव भेदः यद्भोक्तृ
भोगो भोक्तुर्हेश्यकपूर्वस्वामिकर्तृकत्यागङ्कल्पयं स्तत स्तत्स्वत्वध्वंसे सति परिग्रहाद्भोक्तुः स्वत्वोत्पत्तिं निर्बाधामादधातीति मम यथेमि
दं वचनं बोधयतीति तन्मतन्तच्च मया प्यभ्युपगतन्तावत्कालीनभोगस्य सौशील्यादिहेतुकत्वात्सम्भवेन पूर्वस्वामिन इदानीन्त
नभोगकर्तृहेशत्यागं विना तदीयपूर्वागमं विना सम्भवाद्भोक्तुः स्वत्वनिमित्तत्वेन तदुभयान्यतरानास्थावादमभ्युपगच्छता त
था च यत्तन्मते नैकान्तिकत्वन्त्वयादूषणमापादितन्तद्भवन्मतेपि तुल्यं । यच्च सौशील्यादिहेतुकत्वन्तावत्कालीनक्षमायां न स
म्भवतीत्युक्तन्तन्मतेपि समाधानक्षममेवेति । वस्तुतस्तु तावत्कालीनक्षमायाः सौशील्यादिहेतुकत्वासम्भवेपि न नियतः ।
स्वतिसुशीलतादिस्वभावानामाजन्मापेक्षायाः सम्भवात् । वचनमस्तकेति गौरवञ्चोभयमते तुल्यम् । विज्ञानेश्वरमते त्वति
लाघवमुपपादितमेव । किञ्चास्मात्रैकालेस्मर्तव्यास्मरणरूपयायोग्यानुपलब्ध्या भोक्तुरागमाभावनिश्चये पूर्वस्वामिनश्च त्यागाभा
निश्चये तदीयपरिग्रहकृतस्वत्वोत्पत्तिपूर्वस्वामित्वध्वंसावुभावपि कल्पयितुमशक्याविति मतद्वयमपीदमत्ययुक्तम् । यच्चपरम
त्रप्रदीपकृद्भिरुक्तम् । आधेरनुपभोगेन यत्रासिद्धिस्तद्विषयम्पश्यतो बुवत इत्यादिवचनं । तेन यत्राधिग्रहीत्राधेयम्भूम्या
दिर्न भुज्यते । किन्त्वाध्यत्र चिरम्भुक्त्वान्यत्राधीयते तत्रोत्तरस्याधिगृहीतस्तत्र भूम्यादौ प्रभुत्वं न तु प्रथमस्येत्याधौ प्रतिग्रहे क्री
ते पूर्वा तु बलवत्तरेत्येतदपवादार्थमिदमीदृशे विषये वचनन्तेनात्र द्वितीयस्यैवाधिः सिध्यति । यद्वा हानिपदमुपेक्षितकोटौ वि
चारकाणामुपेक्षानिमित्तान्यूनताप्रतिभातीति संशयतादवस्थ्यपरन्नतु हानिभङ्ग एव । तथा सति हीनस्य गृह्यते नादृश इत्यादि
वचनसिद्धन्दण्डमन्तरेणैव पुनर्व्यवहारदर्शनन्न घटत इति पुनर्विचारेणैवात्रापीति निर्णयः । अत एवोपेक्षिता यथाधेनुः व

र्याणि विंशतिर्यथेत्यादिव्यासवचनयोः पश्यन्तमनादृत्यैव यदीयं भूमिधनं परैरुपभुज्यते तदीयत्वेन तेन हीयते तेन निश्चीयते इति व्याख्यानं रत्नाकरकृतापि हृतम्। किञ्च यदि विंशतिवार्षिकी भुक्तिः स्वतो भोक्तुः स्वत्वे प्रमाणान्तर्हि तत एव स्वत्वसिद्धेः शक्तस्य सन्निधावर्थे इत्यादिकात्यायनवचनेन यद्भोगस्य लेख्यादोषनिराकरणार्थमुक्तं तदपार्थकं स्यादिति तदपि चिन्त्यम्। तस्यैतादृगाधिविषयत्वेन प्रकरणादर्थतः शब्दतो वावगम्यते। अस्य चाधिविशेषविषयतायामाधिसीमेत्यस्यैव तदपवादस्यैतादृगाधिभिन्नाधिविषयताप्यशङ्कनीया। आधौ प्रतिग्रहे इत्यादेरयमपवाद इत्ययुक्तमतिव्यवहितस्य तस्य तत्रानुपस्थितेः। विंशत्यादिवर्षात्प्रागपि चैतादृगाधिभोगे परक्रियायाः प्राबल्यस्याप्रतिहतेर्विंशत्यादिग्रहणाविवक्षाप्रसक्तिः॥ वचनं तावत्कालीनैतादृगाधिभोग एव नयेति यदि तर्हि श्रुतभूमिधनसामान्यातिक्रमेणैतादृगाधिकृतत्वविषयत्वस्याग्राह्यस्य कल्पनं तु स्वपनमेव। उपेक्षानिमित्तकविचारकसंशयतादवस्थ्यात्पुनर्विचारः कर्तव्य इत्येतन्मात्रपरमिदं वचनद्वयं सर्वथाभङ्गरूपहानिपरमिति चेद्यदस्य वचनस्य तात्पर्यान्तरवर्णनं तत्रापि विंशत्यादितः प्रागपि तादृगुपेक्षाहेतुकसंशयतादवस्थ्यापरिहारात्पुनर्व्यवहारप्रवृत्त्यावश्यकत्वे विंशत्यादिपदार्थाविवक्षाप्रसक्तिर्दुर्वारा। प्रत्युत विंशत्यादिवर्षानन्तरं तादृगुपेक्षायाः पुनर्विचारः पुरःसरं निर्णयः कर्तव्यः प्राक्तनेऽप्यनौचित्यापत्तिश्चानप्राग्वोपेक्षककोटिन्यूनताप्रतिभासश्चोत्तरोपेक्षायास्तावदेकः सङ्गतिशक्यम्। सत्यां सामग्र्यां प्रागपि तस्य वारयितुमशक्यत्वात्सत्यानृतमपि तदसम्भवात्। कालविशेषनियमानुपपत्तेः। हानिपदस्य निश्चयपरता च वक्ष्यणुवचनेष्वयुक्तास्मिन्पक्षे प्रसज्यते। यच्चोक्तं तावत्कालीनभोगस्य भोक्तृस्वत्वोत्पत्तिहेतुत्वस्य यथाश्रुतस्याश्रयणे शक्तस्य सन्निधावर्थे इत्यादिवचनोक्तं लेख्यादिप्रमाणान्तरस्वत्वसाधकस्य दोषनिराकरणमपार्थकं तावद्भोगादेव स्वत्वसिद्धेरिति तादृग्वचनतात्पर्यबीजं तदप्यमूलकं विज्ञानयोगिव्याख्यानेन तदनभ्युपगमात्। वाचस्पतिस्तु हानिबोधकस्मृतीनां प्रमाणपरिपालनकर्तव्यताविधिशेषत्वम्। यस्मादुपेक्षायां हानिशङ्का भवति तस्मात्स्वपरिमाणं सर्वथा परिपालनीयं न तु तत्रोदासितव्यमित्यत्र तात्पर्यम्।

अत एव कल्पतरौ हानिवचनानि लिखितप्रमाणपरिपालनमुपसंहृतमित्याह तदपि यद्यामद्वा । विंशत्यादियद्दयाविवक्षा
प्रसक्तितादवस्थ्यात् । ततः प्रागपि प्रमाणपरिपालनस्यावश्यकत्वात् । हानिशंकाप्रसक्तिनैत्यात् । प्रदेशान्तरस्थविधिशेषत्वा
नुपपत्तेरत्र च तद्विध्यश्रवणात् । अन्यत्र स्पष्टं तद्विधिसत्वे न तदुन्नयमस्याप्यनुपयोगात् । हानिपदेनातत्फलकप्रमाणपा
रिपालनलक्षणया तत्प्रतियोगिभूतप्रमाणपरिपालनकर्तव्यतापरत्वेऽप्यतत्क्लिष्टत्वापत्तेश्च । तस्मात्समस्तदोषशून्या विज्ञान
योगिव्याख्यैवास्य वचसोऽन्यायसी । ननु अध्यासनात्समारभ्य भुक्तिर्यस्याविघातिनी । त्रिंशद्वर्षाण्यविच्छिन्ना तस्य तां न विचालये
दिति बृहस्पतिवचने त्रिंशद्वर्षभुक्तेर्हान्यापादकत्वोक्ता विंशतिवर्षभुक्तेस्तन्न्यूनवर्षभुक्तेरिव हान्यनापादकत्वमर्थसिद्धमिति
योगीश्वरव्यासादिवचनैरस्य विरोधः । नैवम् । योगीश्वरादिवचनेषु ब्रुवत इत्येतावन्मात्राभिधानाद्ब्रुवत्वविरहणं वाङ्मात्रमपि भू
मिस्वामिनो नास्ति तत्र विंशतिवर्षभोग एव हानिकारणम् । बृहस्पतिवचने तु अध्यासनाद्भूमिपरिग्रहादारभ्य यस्य भुक्तिरवि
घातिनी यदप्रयोगाद्विघातस्य च कलहताडनादिरूपत्वेन लोके प्रसिद्धेर्वाङ्मात्रविप्रतिपत्तौ सत्यामपि यत्र भोक्तुः सह पूर्वस्वामि
ना तद्भोगप्रतिरोधकं कलहताडनादिनाचरितं तत्र त्रिंशद्वर्षभोगस्यादृष्टहान्यापादकप्रतिवचनस्वरसेनैव विरोधपरिहा
रात् मममनुप्रतिभाति । विंशतिवार्षिकोक्त्यादिहानिविशेषणाद्भूम्याद्युत्पन्ननष्टफलस्य विंशतिवार्षिकादेर्हानिस्तावत्कालीनतत्
त्फलमुपेक्षालक्षणादपराधान्न प्राप्नोति । विंशतिदशवर्षेभ्यः प्रागुक्तभोगकालगणनया तदुत्पन्नं नष्टमपि फलं निःक्रय
रूपेण लभत एव विंशत्यादिशब्दोपादानात् । अन्यथा यावत्कालीनपरकृतभोगोपेक्षा तावत्कालीननष्टफलहानिमेव सा
मान्येन वदेत् । एतावत्या विंशत्यादियद्दृषार्थकत्वे विंशत्याद्यधिकवर्षीयफलहानिर्दण्डरूपिकया सिध्यति भुक्तिविशेषणतां
यामिव विंशत्यादिसंख्यायाः तथैवं वचनान्तरसंवादाय तद्भुक्तिविशेषणत्वव्याख्यानोऽस्य व्याख्यानस्य न फलतो विशेष इति वाच्यम् ।
यतो विंशत्यादियद्दृषस्य भुक्तिविशेषणत्वे कियत्कालीननष्टफलहानिरिति साकांक्षमेति । अत एवापराधाभावाद्दाद्यादीन

तद्धानिरपीत्याह योगीश्वरः ॥ ● ॥ आधिसीमोपनिक्षेपजडबालधनैर्विना । तथोपनिधिराजस्त्रीश्रोत्रियाणां धनैरपि ॥ आ
ग्याधेर्भोगार्थमेवाधीकरणादुपेक्षायामपि न स्वामिनोपराधः गोप्याधौ स्वाम्यनुमतिमन्तरेणाभोक्तुमपराधातिशयमापादयतुमेवो
पेक्षोपपत्तिः । जडबालयोस्त्वज्ञत्वादेवोपेक्षा । उपनिक्षेपनिक्षेपयोरपि भुक्तेः प्रतिषिद्धत्वात् दत्तिक्रमे चोपनिक्षेपे पुरुषान्तरनिधानु
असोदयतल्लाभादुपेक्षा । राज्ञोऽनेकराजकार्यव्यग्रत्वात्स्त्रीणामप्रागल्भ्यानभिज्ञत्वाभ्यां श्रोत्रियस्याध्ययनाध्यापनतदर्थवि
चारश्रौतस्मार्त्तकर्मानुष्ठानव्यग्रतयेति सर्वत्र यथायथमपराधविशेषसमाधानमहहतादस्माद्वचनात् कदाचिन्न
ष्टोपचयहानिरपि भवतीत्यर्थः ॥ अत एवाध्यादिभोगे दण्डमधिकमाह स एव । आध्यादीनां विहर्तारं धनिने दापयेद्धनम्
। दण्डं च तत्समं राज्ञे शक्त्यपेक्षमथापि वा ॥ एतत्प्रस्तावे विवेचयिष्यामः । क्वचिदन्यत्रापि नष्टफलहान्यपवादो मनुनो
क्तः । सम्प्रीत्या भुज्यमानानि न नश्यन्ति कदाचन । धेनुरुष्ट्रो वहन्नश्वो यश्च दम्यः प्रयुज्यते । दम्यो दमनार्थं यः प्रयुज्यते ।
मनुनारदौ । आधिः सीमा बालधनं निक्षेपोपनिधिः स्त्रियः । राजस्वं श्रोत्रियस्वं च न भोगेन प्रणश्यति ॥ नारदः अन्वाहितं
हृतं न्यस्तं बलावष्टम्भयाचितं । अप्रत्यक्षं च यद्भुक्तं निक्षेपोपनिधी स्त्रियः । अन्वाहितमेकत्राहितमन्यत्र पुनराहितम् ।
बलावष्टम्भ राजादिबलावष्टम्भेन स्थापितम् । इतरत्प्रसिद्धम् । बृहस्पतिः । भुक्तिस्त्रैपूरुषी सिद्धोदपरेषां न संशयः ।
अनिवृत्ते सपिण्डत्वे सकुल्यानां न सिद्ध्यति । अस्वामिना तु यद्भुक्तं गृहक्षेत्रापणादिकम् । सुहृद्बन्धुसकुल्यस्य न तद्भोगेन ही
यते । विवाह्यश्रोत्रियैर्भुक्तं राजामात्यैस्तथैव च । सुदीर्घेणापि कालेन तेषां सिद्ध्येन्न तद्धनम् । चित्तापनयनेषु च । बालश्रोत्रि
यवित्ते च प्राप्ते च पितृतः क्रमात् । नोपभोगे बलं कार्यमाहर्त्रा तत्सुतेन वा । पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः । भो
गं न कल्पयेत्प्रमाणत्वेन नाद्रियेतेत्यर्थः । गौतमः । अजडापोगण्डधनं दशवर्षभुक्तम्परैः सन्निधौ भोक्तुर्न श्रोत्रियप्रव्रजित
राजपुरुषैः । पशुपुरुषस्त्रीणामनतिभोगः अतिभोगेन हानिरेवेत्यर्थः । कात्यायनः ॥ स्वजातिभिर्बान्धवैश्च भुक्तं यत्स्वजनैश्च

था । भोगात्तत्र न सिद्धिः स्याद्भोगमन्येषु कल्पयेत् । अन्येष्वसंबद्धेषु ॥ सर्वत्रोपभोगे वैकल्यत्वादनुरोधेन शीलादेरपेक्षाहे
तोः सम्भवान्न भोगस्यान्यथोपपन्नस्य स्वत्वहेतुकल्पनाद्वा स्वत्वसाधकत्वं नाप्युपचयहानिहेतुत्वमिति तात्पर्यम् । क्वचिदेकदेशो
पभोगेन समस्तसिद्धिमाह वृहस्पतिः । यद्येकशासने ग्रामे क्षेत्रारामाश्च लेखिताः । एकदेशोपभोगेऽपि सर्वे भुक्ता भवन्ति ते । आ
गमेऽपि बलन्नैव भुक्तिस्तोकापि यत्र नो । इत्यस्यायमपवादः । एकशासनपत्रारूढेषु किञ्चिदुपभोगेऽपि शासनारूढभोगस्या
नपेतत्वान्न प्रत्येकभोगापेक्षेत्याशयः ॥ ● ॥ विच्छिन्नभोगनिर्णयोपायमाह । वृहस्पतिः । छिन्नभोगे गृहक्षेत्रे संदिग्धं यत्र जा
यते । लेख्येन भोगवृद्धैर्वा साक्षिभिः शुद्धिमाहरेत् । नामघाटागमं संख्यां कालं भागमेव च । भोगच्छेदनिमित्तञ्च ये वि
दुस्तत्र साक्षिणः । तद्गुणन्नाश्च सामन्ता येऽन्यदेशे व्यवस्थिताः । मौलास्ते तु समुद्दिष्टाः प्रष्टव्याः कार्यनिर्णये । अदृष्टास्ते तु य
द्ब्रूयुः सन्दिग्धे समदृष्टयः । तत्प्रमाणं प्रकर्त्तव्यमेवं धर्मो न हीयते । स्थावरेषु तदाख्यातं लाभभोगप्रसाधनम् । प्रमाणहीन
वादे तु निर्दिश्याद्दैविकी क्रियेति । सीमाविवादनिर्णय एतत्प्रपञ्चं विवक्ष्यामः । एवम्भुक्तिर्निरूपिता ॥ ● ॥ युक्तिस्वरूपमा
ह । कात्यायनः । लिंगोद्देशस्तु युक्तिः स्यादिति । लिङ्गस्याग्निदत्वाद्यव्यभिचारिण उल्काहस्तत्वादेरुद्देशो निश्चयः तेन स
ग्निदत्वाद्यनुमानम् । यद्यपि भुक्तिरपि निरन्तरत्वनिराक्रोशत्वादिप्रागुक्तविशेषणोपहितानुमानविधयार्थापत्तिविधया वा
साधिका तत्तथापि लक्षणमिदमतिप्रसक्तमेव वक्ष्यमाणचोदनाप्रतिकालेऽपि तथा सम्प्रसिद्धिबलाद्रोवृषवत्तद्भिन्नलिंगोद्देश
एव युक्तिरूपत्वेन लक्ष्यः । अत एव तत्प्रवृत्तिस्थलत्वाद्दृश्यमेवाह नारदः । असाक्षिप्रत्ययास्त्वन्ये षड्विवादाः प्रकीर्तिताः । ल
क्षणान्येव साक्षित्वं तेषामाह मनीषिणः । उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिश्च घातकः । केशाकेशिगृहीतश्च युगपत्पारदा
रिकः । कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता समीपगः । तथा कुठारहस्तश्च वनच्छेत्ता प्रकीर्तितः । समीपगश्च त्यजनापि सम्बध्यते । न
त्वविनाभावापादकविशेषणान्तरोपलक्षणम् । प्रत्यक्षचिह्नैर्विज्ञेयो दण्डपारुष्यकृन्नरः । असाक्षी प्रत्यया ह्येते पारुष्ये तु

परीक्षणम्। साक्षित्वे साक्षिकार्य्ये प्रत्यक्षचिह्नैः शोणिताक्तखड्गादिभिः। पारुष्ये वाक्पारुष्ये परीक्षणं साक्षिगवेषणम्। यद्यपि तत्रापि गालिदानादिश्रवणं प्रत्यक्षचिह्नं सम्भवति। तथापि प्रथमप्रवृत्त्यादिनिश्चयाय साक्ष्यापेक्षेति ध्येयम्। शङ्खलिखितौ। केशाकेशिग्रहणात्पारदारिकः। उल्काहस्तोऽग्निदः। शस्त्रपाणिर्घातकः लोप्त्रहस्तश्चौरः। केशाकेशिग्रहणादिति स्त्रीसंग्रहणे वक्ष्यमाणानामन्येषामपि चिह्नानामुपलक्षणम्। लोप्त्रं चौर्यप्राप्तं वस्तु। वृहस्पतिः। असाक्षिके चिरकृते पृच्छेदुत्तरसाक्षिणः। शपथैर्वानुयुञ्जीत उपधां वा प्रयोजयेत्। उपधा युक्तिरिति कल्पतरौ। शपथाभ्यनुज्ञानमन्यथासिद्ध्युपायाभावे ज्ञेयमत एव नारदः। युक्तिष्वप्यसमर्थासु शपथैरेवमर्दयेत्। अर्दयेत्पीडयेत्। पराजयेतियावदित्युक्तिः॥ ●

॥ चोदनाप्रतिकालस्वरूपन्तु चोदनाया धनदानादिविषयकप्रेरणायाः प्रतिकालो प्रतिषेधः। सोपि यद्यस्य ऋणादिसम्बन्धीन स्याद्बाध्यमान एनं निराकुर्यादनिराकरणादस्य स्यानेन सम्बन्ध इत्यर्थापत्तिविधयाऽनुमानविधया वा ऋणादिसम्बन्धं साधयन्भवति प्रमाणम्। इदमेवाभिप्रेत्याह कात्यायनः। अर्थिनाभ्यर्थितो यस्तु विघातन्न प्रयोजयेत्। त्रिचतुःपञ्चकृत्वो वा परतस्तदृणी भवेत्। नारदोपि। अभीक्ष्णञ्चोद्यमानोपि प्रतिहन्यान्न तद्वचः। त्रिचतुःपञ्चकृत्वो वा परतोर्थं सदाप्नुते। परतस्तदूर्ध्वम्। चोदनाप्रतिकालस्य शीलादिप्रयुक्तस्यापि सम्भवाद्युक्त्यादिसहकार्य्यपक्षमाह। नारदः। चोदनाप्रतिकालस्तु युक्तिलेशस्समन्वयात्। देशकालार्थसम्बन्धपरिमाणक्रियादिभिः। अत एव तस्य विषयमप्याह। स एव। प्रमादाद्धनिनो यत्र न स्याल्लेख्यं न साक्षिणः। अर्थञ्चापह्नुते वादी तत्रोक्तस्त्रिविधो विधिः। चोदनाप्रतिकालस्तु युक्तिलेशस्तथैव च। तृतीयः शपथः प्रोक्तस्तैरेवं साधयेत्क्रमात्। कात्यायनः। दानं प्रज्ञापनाभेदः सम्प्रलोभक्रिया च या। चिन्तापनयनञ्चैव हेतवो हि विभावकाः। एषामन्यतमो यत्र वादिना भावितो भवेत्। मूलक्रिया तु तत्र स्याद्भाविता वादिनिह्नवे। दानं उत्कोचदानं। प्रज्ञापनाभेदः प्रज्ञापकस्य हस्तचिह्नाद्यन्यथाकरणम्। सम्प्रलोभक्रियाः साक्षिसभ्यादिभ्यो लोभप्रदर्शनं चिन्तापनयनं स्वगोप

नम्। एषामन्यतमो हेतुर्यत्र वादिनाप्रतिवादिनाधमर्णादेः परिभावितः प्रमाणेन साधितो भवेत्तदा मूलक्रियाजयापहरणा
दिरूपात्तदुपरि सिद्धेव। एषामन्यतदविनाभावादिति भावः। एवंचाधिलेख्यभुक्तिरूपं त्रिविधं मानुषं प्रमाणं निरूपितं ॥ [illegible] ॥
अथ दिव्यान्युच्यन्ते। तत्र दिव्यानां मानुषप्रमाणाभावएव स्वल्पनिर्णायकत्वमुच्यते। यत्तु स्मृतिसारे। एवकारस्येअपिशब्दार्थ
त्वात् मानुषप्रमाणसत्त्वेपि यत्र दिव्याङ्गीकारस्तत्रापि तद्भवतीति प्रयोजनमुक्तं तदयुक्तम्। एषामन्यतमाभावे दिव्यान्यतममिति
वदता याज्ञवल्क्येन प्रमाणहीनेवादे तु निर्दिष्टा दैविकी क्रियेति वदता बृहस्पतिना च युक्तिप्राप्तसमर्थास्तु शपथैरेनमर्दयेदिति
नारदेनापि मानुषप्रमाणाभावे एव दिव्यस्य विधानात्। तत्र बृहस्पतिः दिव्यभेदानाह। धटोग्निरुदकञ्चैव विषं कोशस्तु पञ्चमः
। षष्ठञ्च तण्डुलाः प्रोक्ताः सप्तमन्तप्तमाषकं। अष्टमं फालमित्युक्तं नवमं धर्मजं स्मृतम्। दिव्यान्येतानि सर्वाणि निर्दिष्टानि स्व
यम्भुवेति। नारदः। युक्तिप्राप्तसमर्थास्तु शपथैरेनमर्दयेत्। अर्थकालबलापेक्षमग्न्यम्बुसुकृतादिभिः। धटोग्निरुदकं
चैव विषं कोशस्तु पञ्चमः। उक्तान्येतानि दिव्यानि विशुद्ध्यर्थं महात्मभिः॥ सन्दिग्धेऽर्थेभियुक्तानां परीक्षार्थं महात्मनाम्। प्रो
क्तानि नारदेनेह सत्यार्थं तु विशुद्धये इति। अर्दयेत्पीडयेत्। अर्थापेक्षत्वं विसंवादितार्थस्याल्पत्वमहत्त्वानुरूपमित्यर्थः
। नन्वेषामपि शपथानां मानुषप्रमाणाभावएव निर्णायकत्वेन दिव्यत्वात् कथं दिव्यानि नवेत्यभिधानं। तथाच शङ्खः। तत्र दिव्या
मनुसाधारणांविधानमग्न्युप्रवेशो लोहधारणमिष्टापूर्तप्रदानमन्यांश्च शपथान् कारयेदिति। तांश्च शपथानाह बृहस
तिः। सत्यवाहनशस्त्राणि गोवीजकनकानि च। देवब्राह्मणपादांश्च पुत्रदारशिरांसि च॥ एते च शपथाः प्रोक्ताः स्वल्पार्थे सु
कराः सदेति। नारदोपि। सत्यवाहनशस्त्राणि गोवीजकनकानि च। देवतापितृपादांश्च दत्तानि सुकृतानि च॥ स्पृशेच्छि
रांसि पुत्राणां दाराणां सुहृदां तथा। अभियोगेषु सर्वेषु कोशपानमथापि वा। इत्येते शपथाः प्रोक्ता मनुना स्वल्पकारणाद्
ति। सत्यम्। अत्र समनन्तरभाविनिर्णयनिमित्तत्वाद्दिव्यत्वेन विवक्षितत्वात्। तस्मात्त्वस्य घटादीनामेव न तु शपथानामन्यो

शंकाकालान्तरभाविनिर्णयनिमित्तत्वात्। नन्वेवंकोशस्यकथन्तेषुग्रहणमितिचेत्सत्यम्। तस्यतेषुपाठोमहाभियोगविषयत्वसाम्यात्सावष्टंभाभियोगविषयत्वसाम्याच्च। वस्तुतस्तुशपथानामपिनारदादिवचनानुसरणाद्गोबलीवर्दन्यायेनदिव्यत्वाभ्युपगमेनतवग्रहस्योपलक्षणत्वात्। तथाचनारदः। युक्तिष्वप्यसमर्थासुशपथैरेनमर्दयेत्। अर्थकालबलापेक्षमग्न्यम्बुसुकृतादिभिः॥ धटोग्निरुदकञ्चैवविषंकोशश्चपञ्चमः। उक्तान्येतानिदिव्यानिविशुद्ध्यर्थेमहात्मभिः। दिव्यंनामतुलारोहणम्। विषाशनमप्सुप्रवेशोलोहधारणमिष्टापूर्त्तप्रदानमन्याश्चशपथान्कारयेत्। मनुः। असाक्षिकेषुत्वर्थेषुमिथोविवदमानयोः। अविदंस्तत्त्वतस्सत्यंशपथेनापिलम्भयेत्॥ अग्निंवाहारयेदेनमप्सुचैनंनिमज्जयेत्। पुत्रदारस्यवाप्येनंशिरांसिस्पर्शयेत्पृथक्॥ यस्माद्देवैःप्रयुक्तानिपुष्करार्थेमहात्मभिः। परस्परविशुद्ध्यर्थन्तस्माद्दिव्यानिनामतः॥ असाक्षिकेष्वितिमानुषप्रमाणरहितेष्वित्यर्थः। उद्दिष्टानांदिव्यानांमध्येतुलादीनिमहाभियोगेप्रयोक्तव्यानि। तथाचयाज्ञवल्क्यः। तुलाग्न्यापोविषंकोशोदिव्यानीहविशुद्धये। महाभियोगेष्वेतानिशीर्षकस्थेभियोक्तरि॥ रुच्यावान्यतरःकुर्य्यादितरोवर्त्तयेच्छिरः। अत्राग्निशब्देनतप्तायःपिण्डादयोगृह्यन्ते। शीर्षकंलक्षणयाजयपराजयनिमित्तोदण्डःतत्प्रयुक्तदण्डभागीत्यवरुच्याइच्छया। इतरःअभियुक्ताभियोक्त्रोरन्यतरः। इतरःशिरोवर्त्तयेत्। दण्डंस्वीकुर्यादित्यर्थः। ननुकोशमल्पेपिदापयेत्। इतिस्वल्पाभिप्रेतेपिकोशस्यविधानात्कथंमहाभियोगेष्वेतानीतिचेन्न। तस्यतुलादिषुपाठःयोवष्टम्भाभियोगेपिप्राप्त्यर्थः। ननुमहाभियोगेष्वेवेतिनियमार्थः। अन्यथाकोशस्यशंकाभियोगएवप्राप्तिःस्यात्। अवष्टंभाभियुक्तानान्धटादीनिविनिर्दिशेत्। तण्डुलाश्चैवकोशश्चशंकास्वेतेनियम्यचेतिपितामहस्मरणात्। अवष्टम्भःशीर्षकस्थः। अवष्टम्भोत्रनिश्चयइतिस्मृतितत्त्वे। यदाशीर्षकस्थोभियोक्तानस्यात्तदाएतानिदिव्यानिनस्यादिति। तथाचनारदः। शिरोवर्त्तीयदानस्यात्तदादिव्यंनदीयतइति। इतिदिव्यदानेनियममाह। पितामहः। अभियोक्ताशिरस्थानेदिव्येषुपरिकीर्त्यते। अभियुक्तायदातव्यन्दि

व्यं श्रुतिनिदर्शनात्। इति कात्यायनोपि। न कश्चिदभियोक्तारं दिव्येषु विनियोजयेदिति। अभियुक्ताय दातव्यमित्यस्यापवा
दं स्वयं वाऽन्यतरः इत्यनेनाह याज्ञवल्क्यः। नारदोपि। परियोक्ता शिरःस्थाने सर्वत्रैकः प्रकल्पितः। इच्छया चेतरः कुर्यादि
तरो वर्त्तयेच्छिर इति। क्वचिद्विषयविशेषे विरोधिनापि दिव्यं देयमित्याह। याज्ञवल्क्यः। विनापि शीर्षकात् कुर्यात् नृपद्रोहेऽथ
पातक इति। शीर्षकाद्विनापि पराजयप्रयुक्तदण्डभागिनोऽभियोक्तुरभावेपि। पातके ब्रह्महत्यादौ। कात्यायनोपि। पार्थिवैः शं
कितानाञ्च निर्दिष्टानाञ्च दस्युभिः। आत्मशुद्धिपराणाञ्च दिव्यं देयं शिरो विनेति॥ कालिकापुराणेपि। परदाराभिशापे च चौ
र्य्यागम्यागमेषु च। महापातकशस्ते च स्याद्दिव्यं न्हप साहसे। विप्रतिपत्तौ विवादेऽवर्णास्थापनेऽकृते॥ तत्रैव स्थापयेद्दिव्यं
शिरःपूर्वं महीपतिः। परदाराभिमर्षे च वहवो यत्र वादिनः॥ शिरोहीनं भवेद्दिव्यमात्मनः शुद्धिकारणादिति॥ विप्रतिपत्तौ
परधारगमनाद्यभियोगरूपायां विवादे ऋणादानादिविषये अवर्णोऽपवादः। परदाराभिमर्षे चेति चौर्य्यादीनामप्युपलक्ष
णं। विष्णुः। राजद्रोहे साहसे च विना शीर्षप्रवर्त्तनादिति। विषयविशेषेषु दिव्यविशेषानाह संग्रहकारः धटादीनि विषान्ता
नि गुरुष्वर्थेषु दापयेत्। पितामहोपि। अवष्टंभाभियुक्तानां धटादीनि विनिर्दिशेत्। तण्डुलाश्चैव कोशश्च शंकास्वेतानि नियोज
येत् इति। कात्यायनः। शङ्काविश्वाससन्धाने विभागे रिक्थिनां सदा। क्रियासमूहकर्त्तृत्वे सम्भूयैकक्रियाकारित्वे। पिताम
होपि। विश्रंभे सर्वशंकासु सन्धिकार्य्ये तथैव च। एषु कोशः प्रदातव्यो नित्यं चित्तविशुद्धये॥ शिरस्थायिविहीनानि दिव्यादीनि
विवर्द्धयेत्। घटादीनि विषान्तानि कोश एको शिरःस्मृत इति। तण्डुलानां विषयं स एवाह। चौर्य्ये तु तण्डुला देया नान्यत्रेति विनि
श्चय इति। अन्यत्र स्त्रीसंग्रहादौ न तु दत्तापन्हवे। तदर्धार्द्धस्य तण्डुला इति वक्ष्यमाणकात्यायवचनेन तण्डुलदिव्यविधानात्
। एतदल्पचौर्य्यशङ्कायां वेदितव्यम्। चौर्य्याभिशंकायुक्तानां तप्तमाषो विधीयते। इति महाचौर्य्यशंकायां तप्तमाषस्य तेनैव वि
धानात्। द्रव्यसंख्ययादिव्यविशेषानाह विष्णुः। अथ शपथक्रियाराजद्रोहादिषु यथाकामं निक्षेपणं स्तेयेष्वर्थप्रमाणादिति।

शपथो दिव्यम्। राजद्रोहादिषु यथाकामं राजेच्छानुरोधाद्दिव्यं निक्षेपादिषु धनतारतम्यादित्यर्थः। वस्त्रादिविषयविचारे तु तन्मू
ल्यद्रव्यपरिमाणं ग्राह्यम्। बृहस्पतिरपि। विषं सहस्रे ऽपहृते पादोने च हुताशनः। त्रिभागोने च सलिलमर्धे देयो घटः सदा। ध
नुः शताभियोगे तु दातव्यस्तप्तमाषकः। त्रिशते तण्डुला देयाः कोशश्चैव तदर्धके। शतहृते ऽपहृते च दातव्यं धर्मशोधनम्। गोच
रस्य प्रदातव्यं सद्यः कालावलेहनम्। एषा संख्या निकृष्टानां मध्यानां द्विगुणा स्मृता। चतुर्गुणोत्तमानां च कल्पनीया परीक्षकै
रिति धर्मशोधनम्॥ धर्मजन्दिव्येन शोधनम्। निकृष्टत्वमाद्युत्तिगुणधर्मभिः मध्यमत्वमुत्तमत्वं च तैरेव। यत्तु। नासहस्राद्ध
रेत्फालं न विषं न तुलां नयेदिति याज्ञवल्क्यवचनं तन्मध्यमोत्तमपुरुषविषयम्। यत्तु सहस्रे तु घटं दद्यात्सहस्रार्धे तथायसम्।
अर्धस्यार्धे तु सलिलं तस्यार्धे तु विषं स्मृतमिति। यत्पितामहवचनं तद्धनाल्पद्रव्यापहारेऽपि नित्यं भवति तद्विषयम्॥ ०॥ ए
तत्स्तेयसाहसविषयं द्रव्यापह्नवे तु। कात्यायनः। द्रव्यस्यापह्नवे यत्र प्रमाणं तत्र कल्पयेत्। स्तेयसाहसयोर्दिव्यं स्वल्पेऽप्यर्थे प्रदा
पयेत्। सर्वद्रव्यप्रमाणं तु ज्ञात्वा हेम प्रकल्पयेत्। हेमप्रमाणयुक्तं तु तदा दिव्यं प्रयोजयेत्। ज्ञात्वा संख्यां सुवर्णानां शतनाशे
विषं स्मृतं। अशीतेस्तु विनाशे वै दद्याच्चैव हुताशनम्। षष्ट्या नाशे जलं देयं चत्वारिंशति वै घटं। विंशद्दशविनाशे तु कोशपानं
विधीयते। पञ्चाधिकस्य वा नाशे तदर्धार्धस्य तण्डुलाः। ततोऽर्धार्धविनाशे हि स्पृशेत्पुत्रादिमस्तकान। ततोऽर्धार्धविनाशे तु
लौकिकस्य क्रिया स्मृता। एवं विचारयन्राजा धर्मार्थाभ्यां न हीयत इति। अत्र सुवर्णः षोडशमाषात्मकः। वाशोऽपह्नवः।
विंशद्दशविनाशे विंशतेर्वा दशानां वेत्यर्थः। विंशद्दशविनाशे विंशद्विनाशनमिति स्मृतिचन्द्रिकायाम्। पञ्चाधिकस्य पञ्चभ्योऽधिक
स्य षट्प्रभृतेरित्यावत्। तदर्धार्धस्य सुवर्णप्रभृतेः। ततोऽर्धार्धस्य अष्टमाषोनसुवर्णार्धप्रभृतेः। ततोऽर्धार्धस्य विनाशे सा
र्धषण्माषोनसुवर्णार्धप्रभृतेर्विनाशे। लौकिकाश्च क्रियाः। अपह्नवे तद्दशगुणो दण्डनाशो भविष्यतीत्यादिकाः। चशब्दः स्मा
र्तशपथसंग्रहार्थः। अत एवाह विष्णुः। सर्वेष्वेवार्थजातेषु मूल्यं कनकं कल्पयेत्। तत्र कृष्णलोने शूद्रं दूर्वाकरं शापयेत्। द्वि

ष्णलेनेतिलकरम्। त्रिकृष्णलेनेजलकरश्चतुःकृष्णलेनेसुवर्णकरम्। पञ्चकृष्णलेनेसीरोद्धृतमहीकरम्। नवसुव
र्णार्द्धेनेकोशोदेयःशूद्रस्यतमःपरंयथार्हंघटाग्न्युदकविधानामन्यतमंद्विगुणार्थेयथाभिहितासमयक्रिया। वैश्यस्यत्रिगुणै
र्थेराजन्यस्यकोशवर्जंचतुर्गुणार्थेब्राह्मणस्यकोशन्दद्यात्। अन्यत्रागामिकालसमयनिबन्धनक्रियातःकोशस्थानेब्राह्मणंसीरोद्धृ
तमहीकरमेवशापयेत्। प्राग्दृष्टदोषंस्वल्पेप्यर्थेदिव्यानामन्यतममेवकारयेत्। सन्तुप्रथितंसच्चरितंनमहत्यर्थेपीति। सी
रोद्धृतमहीकरंलाङ्गलोद्धृतलोष्टहस्तमित्यर्थः। अनयहणामधिकेशापनिवृत्त्यर्थंशापेतुविशेषमाहमनुः। सत्येनशापयेद्वि
प्रंक्षत्रियंवाहनायुधैः। गोबीजकाञ्चनैर्वैश्यंशूद्रंसर्वैस्तुपातकैरिति। यद्यहमर्थापह्नवीस्यान्तदासत्याभिधानधर्मोममनि
ष्फलःस्यादितिशपथकारिणंब्राह्मणंवाचयेत्। एवंक्षत्रियादीनांवाहनादीनिनिष्फलानिस्युरित्यादीत्यर्थः। पादस्वर्णादी
नांविशेषःस्मृत्यन्तरेदर्शितः। निष्केतुसत्यवचनंद्विनिष्केपादलम्भनम्। ऊमनिकेतुपुष्पंस्यात्कोशपानमतःपरमिति।
अत्रनिष्कशब्देनकर्षचतुर्थांशोमुद्रामुद्रितःप्रतिपाद्यते। क्वचिद्देशेतत्रापिनिष्कव्यवहारात्। ननुमनूक्तोनिष्कः। तस्यरा
जतपलात्मकत्वेनमूलकाञ्चनकर्षादधिकत्वात्। तत्रसत्यवचनविधौचतुर्गुणोऽर्थेब्राह्मणस्येतिविरोधःस्यात्। दिव्येदण्डेचम
नूक्तंग्राह्यंपरिमाणम्। ग्राह्यमितिवृहस्पतिराह। संख्यारश्मिरजोमूलामनुनासमुदाहृता। कार्षापणान्तासादिव्येनियो
ज्याविनयेतथेति। संख्यापरिमाणंरश्मिरजोमूलात्त्रसरेण्वादिका। विनये। दण्डे। तच्चपरिमाणम्प्रतिज्ञापूर्वकंमनुराह। लो
कसंव्यवहारार्थंयाःसंज्ञाःप्रथिताभुवि। ताम्ररूप्यसुवर्णानांताःप्रवक्ष्याम्यशेषतः॥ जालान्तरगतेभानौयत्सूक्ष्मंदृश्यतेर
जः। प्रथमन्तत्प्रमाणानांत्रसरेणुम्प्रचक्षते॥ त्रसरेणवोऽष्टौविज्ञेयालिक्षैकापरिमाणतः। ताराजसर्षपस्तिस्रस्तेत्रयोगौ
रसर्षपः॥ सर्षपाःषड्यवोमध्यस्त्रियवन्त्वेककृष्णलं। पञ्चकृष्णलकोमाषस्तेसुवर्णस्तुषोडश॥ पलंसुवर्णाश्चत्वारःपलानिध
रणन्दश। द्वेकृष्णलेसमधृतेविज्ञेयोरौप्यमाषकः॥ तेषोडशस्याद्धरणम्पुराणश्चैवराजतः॥ धरणानिदशज्ञेयःशतमान

स्तुराजतः॥ कार्षापणस्तुविज्ञेयःकार्षिकस्ताम्रिकःपणः। चतुःसौवर्णिकोनिष्कोविज्ञेयस्तुप्रमाणतइति॥ अत्रताम्ररूप्यसु
वर्णानामितिताम्ररूप्ययोरल्पत्वात्प्राक्प्रयोगेनतुक्रमप्रदर्शनार्थः। पलानिधरणन्दशेत्यन्तंसुवर्णपरिमाणाभिधानम्।
चतुःसौवर्णिकोनिष्कइत्युक्तंरूप्यपरिमाणाभिधानम्। अवशिष्टेनताम्रपरिमाणाभिधानम्। जालान्तरप्रविष्टेसूर्यर
श्मौयत्सूक्ष्मंरजोदृश्यतेतत्त्रसरेणुसंज्ञकंअष्टौत्रसरेणवोलीक्षाराजसर्षपः। त्रयोराजसर्षपाःगौरसर्षपः। षड्गौर
सर्षपामध्यमोयवोनसूक्ष्मन्नस्थूलमिति। मध्यमयवस्यपरिमाणमुक्तमिताक्षरायाम्। मध्यशब्दःपादपूरणार्थः। तथाच
संपूर्णयवपरिमाणमुक्तमितिमनुभाष्ये। त्रयोयवाःकृष्णलं। माषःपञ्चकृष्णलानि। सुवर्णःषोडशमाषाः। पलंसुवर्णाश्चत्वारः
॥ धरणन्दशपलानि। रूप्यमाषोद्वेकृष्णले। राजतस्यधरणंषोडशरूप्यमाषाः। अस्यचपुराणइतिसंज्ञान्तरं। राजतःशतमा
नःराजतदशधरणानिराजतपलसंज्ञाप्यस्यभवति। शतमानन्तुदशभिर्धरणैःपलमेवत्वितियाज्ञवल्क्यस्मरणात्। पूर्वोक्तसुवर्ण
चतुष्टयपरिमितिरेकोराजतनिष्कः। कार्षिकःकर्षसंमितःताम्रिकस्ताम्रविकारःकार्षापणोविज्ञेयः। पणइतिचसंज्ञास्ये
वविज्ञेयेत्यर्थः। चशब्दोऽध्याहार्यः। अतएववृहस्पतिः। निष्कंसुवर्णाश्चत्वारःकार्षिकस्ताम्रिकःपणः। ताम्रकर्षकृतामु
द्राविज्ञेयःकार्षिकःपणः॥ सएवचान्द्रिकाप्रोक्ताताश्चतस्रस्तुधानकाः॥ ताद्वादशसुवर्णस्तुदीनाराख्यःसएवतुइति। कर्षः
पलचतुर्थांशः। तेषोडशाक्षःकर्षोस्त्रीपलङ्कर्षचतुष्टयमित्यमरसिंहेनाभिधानात्। तेमाषाःषोडशाक्षःकर्षइतिचसंज्ञे
त्यर्थः। तेनाक्षकर्षशब्दयोःसुवर्णपरिमाणवचनत्वमित्यवगम्यते। याज्ञवल्क्यः। पलेविकल्पमाह। पलंसुवर्णाश्चत्वारःप
ञ्चवापिप्रकीर्तितमिति। तस्यचतुर्थांशोविंशतिर्माषाःतत्परिमितःकार्षापणः। अतएवकात्यायनः। माषोविंशतिभागस्तु
ज्ञेयःकार्षापणस्यतु। काकिणीतुचतुर्भागामाषकस्यपणस्यचेति। राजतोपिकार्षापणोस्तीत्याहनारदः। कार्षापणोदक्षिण
स्यान्दिशिरौप्यःप्रवर्त्ततइति। व्यासस्तु। निष्कस्यप्रमाणमाह। पलान्यष्टौसुवर्णास्तुतेसुवर्णाश्चतुर्दश। एतन्निष्कप्रमाण

न्नुव्यासेनपरिकीर्त्तितमिति ॥ ● ॥ वर्णभेदेनदिव्यव्यवस्थामाहनारदः । ब्राह्मणस्यघटोदेयःक्षत्रियस्यहुताशनः । वैश्य
स्यसलिलन्देयंशूद्रस्यविषमेवतु । साधारणःसमस्तानांकोशःप्रोक्तोमनीषिभिः । विषंविनाब्राह्मणस्यसर्वेषांवातुलास्मृता
इति । अनित्याचेयंव्यवस्था । राजन्येऽग्निंघटंविप्रेवैश्येतोयंनियोजयेत् ॥ सर्वेषुसर्वदिव्यंवाविषवर्ज्जंद्विजोत्तमे ॥ इतिका
त्यायनस्मरणात् । व्यवस्थापक्षेवयोविशेषादिनाव्यवस्थापनीयम् । तदाहनारदः । क्लीवानातुरान्स्त्वहीनान्परितप्तादि
तान्नरान । बालवृद्धातुरांस्त्रींश्चपरीक्षेतघटंसदा । स्त्रीणान्तुनविषंप्रोक्तंनवापिसलिलंस्मृतम् । घटकोशादिभिस्तासाम
न्तस्तत्त्वंविचारयेत् । नार्मीनान्तोयशुद्धिःस्यात्नविषम्पित्तरोगिणाम् । चित्र्यन्धकुनखादीनांनाग्निकर्मविधीयते । नमज्ज
नीयाःस्त्रीबालाधर्म्मशास्त्रविचक्षणैः । रोगिणोयेचवृद्धाःस्युःपुमांसोयेचदुर्बलाः । निरुत्साहान्व्याधिक्लिष्टान्नार्त्तांस्तोयेनिम
ज्जयेत् ॥ सद्योम्रियन्तेमज्जन्तःस्वल्पप्राणाहितेस्मृताः । साहसेष्वागतानेतान्नैवतोयेनिमज्जयेत् । नचापिहारयेदग्निन्नवि
षेणविशोधयेत् ॥ याज्ञवल्क्यः । तुलास्त्रीबालवृद्धान्धपंगुब्राह्मणरोगिणाम् । अग्निर्जलम्वाशूद्रस्ययवाःसप्तविषस्यचेति ॥
। स्त्रीमात्रजातिवयोऽवस्थाविशेषानादरेण । बालश्चाषोडशाद्वर्षाज्जातिविशेषानादरेण । वृद्धोऽशीतिकावरः । अन्धोने
त्रविकलः । पंगुःपादविह्वलः । ब्राह्मणोजातिमात्रम् । रोगीव्याधितः । एतेषांशोधनार्थेसर्वदिव्यसाधारणेषुमार्गशीर्षचै
त्रवैशाखेषुस्त्र्यादीनांसर्वदिव्यप्रसक्तौतुलैवेतिनियम्यतेनतुसर्वकालंस्त्रीणांतुलानियमःकोशादिविधानात् । अग्निःफाल्गुन
माघयोःक्षत्रियस्य । जलमेववैश्यस्य । यवाएवार्थेशूद्रस्यविषस्यसप्तैवयवाउक्तप्रमाणलक्षणाभवन्तीत्यर्थः । ब्राह्मणस्यतुला
विधानात् । शूद्रस्यविषविधानात् । अग्निर्जलंवेतिक्षत्रियवैश्यविषयमित्यवगम्यते । अतएवपितामहः । ब्राह्मणस्यघटोदेयः
क्षत्रियस्यहुताशनः । वैश्यस्यसलिलम्प्रोक्तंविषंशूद्रस्यदापयेदिति ॥ कात्यायनोऽपि । नचोहशिल्पिनामग्निःसलिलंनाम्बुसे
विनाम् । मन्त्रयोगविदाश्चैवविषन्दद्यात्तुनक्वचित् ॥ तण्डुलैर्ननियुञ्जीतव्रतिनंमुखरोगिणामिति । व्रतिनम्पयोव्रतादिनियम

याश्रितम्। नतत्रविद्यतेकिञ्चिद्यत्परेणाभियुज्यतइति। यदातुनप्रतिपद्येततदाराजानम्प्रत्याहसएव। तेषांनदद्याद्यदितु
तद्धिरण्यंयथाविधि। उभयन्निगृह्यदाप्यःस्यादितिधर्मस्यधारणा। निःक्षिप्तस्यधनस्यैवम्प्रीत्योपनिहितस्यच। राजाविनिर्ण
यंकुर्य्यादक्षिण्वन्न्यासधारिणमिति। तेषांअभियोक्तृणाम्। उभयंद्विगुणम्। निगृह्यदण्डयित्वाअक्षिण्वन्अताडयन्।
निःक्षेपग्रहीतारम्प्रत्याहबृहस्पतिः। स्थापितंयेनविधिनायेनयच्चयथाविधि। तथैवतस्यतद्देयंनदेयम्प्रत्यनन्तरइति॥ स्थापि
तेतरस्ययस्यस्थापितद्रव्यस्वाम्यमस्तिसइहप्रत्यनन्तरउच्यतइतिस्मृतिचन्द्रिकायाम्प्रत्यनन्तरेपुत्रादावितिकल्पतरौस्थापक
म्प्रत्याहमनुः। योयथानिःक्षिपेद्धस्तेयमर्थंयस्यमानवः। सतथैवग्रहीतव्योयथादायस्तथाग्रहः। मिथोदायःकृतोयेनग्र
हीतोमिथएववा। मिथएवप्रदातव्योयथादायस्तथाग्रहः। समुद्रेनाप्नुयात्किञ्चिद्यदितस्मान्नसंहरेदिति। दायोदानं
स्थापनमितियावत्। यथायोग्रहणंमिथःअन्योन्यमेवएतदुक्तम्भवति। साक्ष्याक्षिप्तेनस्थापितम्। साक्षिसाक्षिसमक्षंगृहीतव्य
म्। रहसिस्थापितंरहस्येवेति। समुद्रेमुद्रासहितेनिःक्षेपेमूषकादिनोपहृतेनिःक्षेपंस्थापयित्वानकिञ्चिद्दूषणमाप्नुयात्।
यदितस्मान्निःक्षेपात्प्रतिमुद्राश्रावणादिनानापहरेत्किञ्चिदित्यर्थः॥ स्थापयितुर्मरणेप्रत्यनन्तरेतद्देयमित्याहसएव। स्व
यमेवतुयोदद्यान्मृतस्यप्रत्यनन्तरे। नसराज्ञाभियोक्तव्योननिःक्षेप्तुश्चबन्धुभिरिति। अनेनवचनेनवचोभंग्यास्थापकेमृतेप्रत्य
नन्तरेप्रत्यर्पणंग्राहकेणकार्यमित्युक्तम्। स्वयमेवयाचनमन्तरेणेत्यर्थः। याचनमन्तरेणदानम्भयादिकालोपायेमन्तव्यम्
अन्यथादोषापत्तेः। प्रत्यनन्तरवक्तृत्वेतुनैकस्मिन्प्रत्यनन्तरेदेयंकिन्तुसर्वप्रत्यनन्तरसन्निधावितिननिःक्षेप्तृबंधुभिरभियो
क्तव्यइत्यनेनसूचयाम्बभूव। यदातुग्राहकःस्वयमेवनददातितदाप्रत्यनन्तरकर्त्तव्यमाहसएव। अच्छलेनैवचान्विच्छेत्तम
र्थंप्रीतिपूर्वकं। विचार्य्यतस्यवावृत्तंसाम्नैवपरिसाधयेदिति। अन्विच्छेत्अवधारयेत्परिसाधनंग्राहकसकाशादादानंतद्ग्राह
कवृत्तंविचार्यसतद्ग्राहकविषयेसाम्नैवकार्य्यंनभयादिप्रदर्शनेन। दुर्वृत्तग्राहकविषयेतुच्छलादानप्रकारेणोक्तेनभयादिप्र

दर्शनाद्युपायान्तरेण छलादिना कार्य्यमित्यस्मादेव वचनादवगम्यते । तथा सद्भूतेर्थे विप्रतिपन्ने भूतानुसारेण साधयितुमशक्ये साक्ष्याद्यभावे प्रत्यनन्तरादिना साधयेत् । दुर्वृत्ते तु विप्रतिपन्ने छलादिनापरिहरेदिति वास्मादेव वचनादवगम्यते । सद्भूते छलादिप्रयोगवच्छपथेन शोधनस्याप्यनुचितत्वात् । ग्राहके तु मृते पश्चात्तदधीनन्निःक्षेपादि जायते तेनैव स्थापके प्रत्यनन्तरे वा प्रत्यर्पणीयमित्यतिस्थूलत्वात्स्मृतिकारैरुपेक्षितमित्यस्मादृणाकरणमुन्नेयं यदि ग्राहकवत्सोऽस्वयं न ददाति तदा स्थापकः प्रत्यनन्तरो वा पूर्वोक्तमार्गेणान्विच्छेत्सम्प्रतिपन्नं पूर्वोक्तेन प्रकारेण परिग्रहं साधयेदित्येतदपि स्मृतिकारैरुपेक्षितं ज्ञातुमशक्यत्वादिति स्मृतिचन्द्रिकायाम् । निःक्षेपेऽभिहितन्धर्मं याचितादिष्वतिदिशति नारदः । एष एव विधिर्दृष्टो याचितान्वाहितादिषु । शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव चेति ॥ याचितं उत्सवादिषु परकीयमलंकारादि याचित्वा समानीतम् । अन्वाहितं यस्मिन्स्थितम्परधनमन्यहस्ते कृतं शिल्पिषु शिल्पिन्यासे कुण्डलादिकरणाय स्वर्णकारादिहस्तन्यस्तसुवर्णादावित्यर्थः । प्रतिन्यासे मिथः कार्य्यापेक्षया त्वदीयमेतन्मया स्थाप्यते मदीयमेतत्त्वया स्थापनीयमिति स्थापिते नारदेन निःक्षेप एव विध्युपदेशादुपनिधिन्यासयोस्तदतिदेशः । याज्ञवल्क्योपि । याचितान्वाहितन्यासनिःक्षेपादिष्वयं विधिरिति । यद्यपि स्मृत्यन्तरे न्यासनिःक्षेपयोर्विधिरुपदिष्टस्तथाप्यस्यां स्मृतौ नोपदिष्टाइत्युपनिधिधर्माणामतिदेशो युक्तः । बृहस्पतिरपि । अन्वाहिते याचितके शिल्पिन्यासे सबन्धके । एष एवोदितो धर्मस्तथा चशरणागतइति ॥ अनेन याचितस्य शिल्पिन्यासस्य दैवादिना नाशे स्वर्णकारप्रभृतिस्तं दाप्याइत्युक्तं तस्य क्वचिदपवादमाह कात्यायनः । एतत्स्वसंस्थितेन्यासो दिवसैः परिनिष्ठितैः । तदूर्ध्वं स्थापयेच्छिल्पी दाप्यो दैवाद्धतेपि तन्मिति । रजकस्य हस्ते नैर्मल्यार्थं दत्तस्य जीर्णवस्त्रादेर्येन्यवघातादिना नाशः अवघातादिना नैर्मल्यार्थं तदा शिल्पिदोषाभावान्न शिल्पी न दाप्यः । नूतनादेस्तु पटुतरावघातादिकृत्वा नाशस्य शिल्पिदोषकृतत्वात्तन्मूल्यं दाप्य इत्यभिसन्धायाह स एव । न्यासदोषाद्विनाशः स्याच्छिल्पिनं तन्न दापयेत् । दापयेच्छिल्पिदोषात्तं संस्थं यथैवार्पितमि-

ति । शिल्पिदोषादिव्यव विनाशः स्यादित्यनुषज्यते । यत्र तन्त्वादिकमाहृत्य कुविन्दादौ न्यस्तं तत्र पटादिद्रव्यं मध्ये परिपू-
र्णं दत्तं वा कुविन्दादिना दीयमानं स्वामिना न गृहीतं स्यात् तदाप्रदृष्टमनाप्याहर्तुमनुकाङ्क्षयतो । स्वल्पेनापि च यत्कर्म नष्टं
भृतकस्य तत् । पश्चाच्च गृहे स्वामिनो विनश्येत् तद्गृह्णीयादिति । तत्कर्मवस्त्रनिर्माणादि स्वल्पेनापि ग्रन्थवानादिमापि स्वकर्मा-
णं चेत् भृतकस्य शिल्पिन एव नष्टम् । पुनर्वैतनग्रहणं विनैव वानादिक्रियां कुर्यादित्यर्थः । यदि स्वामी तत्वादि कर्म पुनर्नो-
पयति तद्द्वानाभावे पि शिल्पिने दत्तं वेतनं स्वभक्तपर्याप्तम् परिपूर्णवस्त्रादि कर्म दत्तं भृतकस्य यः स्वामी तस्य दीयमानमगृह्-
न्नस्तस्यैव प्रणश्यतीत्यर्थः । एवं चात्र भृतको नष्टं न दाप्य इति पर्यवसितोर्थः । एवं शिल्पिन्यासविषये विशिष्टयाचितकविषये-
प्याह स एव । यदि तत्कार्यमुद्दिश्य कश्चन परिनियम्यते । याचितो ऽकृते तत्र यस्मिन् प्राप्ते न तु दाप्यत इति । तात्पर्यं तावदुच्य-
ते । याच्यमानो न दद्याद्दाप्यस्तत्सोदयमपि चेदित्यत्र मीयाचितक इति देशप्राप्तो ऽनेन वचनेन कश्चित्प्रतिषिध्यते । प्रतिषेध-
कवचनस्यायमर्थः । यद्दीर्घकालसाध्यं कार्यं तत्कार्यार्थं याचितं यदि यावत्पर्यन्तं गृहीतमिति वं कालं परिनियम्य याचितं
तत्कार्यमध्ये परिनियतकालमध्ये वा प्रतियाच्यमानेन याचितकं न ददाति ससोदयं न दाप्यः । किन्तु कार्यं कृते परिनियतका-
लात्यये वा याचितकमाददद्यादिति । यदि तदा विधायाचितकं न ददाति तदा दैवादिना नाशे चौरहृते वा जाते तन्मूल्यमावहेद् यमि-
त्यप्याह स एव । प्राप्तकाले कृते कार्ये न दद्याद्याचितोपि सन् । तस्मिन्नष्टे हृते वापि यदीतामूल्यमावहेदिति । कश्चित्कार्यम-
ध्ये परिनियतकालमध्ये वा याचितकं दाप्य इत्याह स एव । अथ कार्यविपत्तिस्तु तस्यैव स्वामिनो भवेत् । अप्राप्ते वै समये तु दाप्य-
स्तदर्हं कृतेपि मदिति । यदि याचितकालप्रतिदानेन स्वामिनः कार्यनाशः सम्भाव्यते तदा दद्यादित्यर्थः । याचितकाच प्रतिदा-
ने तु कर्तव्यमाह स एव । यो याचितकमादाय न दद्यात्प्रतियाचितः । स निगृह्य बलाद्दाप्यो दण्ड्यश्च न ददाति य इति । स च वाधि-
गृह्य दाप्यो दाने ऽन्यथा च दण्ड्यः । एवमपि यो न ददाति स दण्ड्य इत्यर्थः । प्रक्षालनार्थं निजकहस्ते दत्तं यद्वस्त्रं तस्य तेन नाशे

हृतेतन्मूल्यंतस्माद्ग्राह्यमित्याह नारदः। मूल्याष्टभागोहीयेतसकृद्धौतस्यवाससः। द्विःपादस्त्रिस्तृतीयांशश्चतुर्द्धौतेऽर्द्ध-
मेवच । अर्द्धक्षयात्तुपरतःपादांशापचयःक्रमादिति । सकृद्धौतस्यनाशेऽष्टमांशन्यूनंतन्मूल्यंग्राह्यंद्विर्द्धौतेचतुर्थांश-
न्यूनम् । एवंत्रिर्द्धौतेतृतीयांशमित्येवमुत्तरत्रापियोज्यम् । वस्त्राणांप्रक्षालनंनेजकेननपाषाणेकार्यंकिन्तुश्लक्ष्णेशाल्मले-
फलकेनचतेषांव्यत्यासःकार्योनचतानिस्वगृहेरात्रौस्थापनीयानिइममेवार्थमभिसन्धायाहमनुः । शाल्मलेफलकेश्लक्ष्णेनि-
ज्याद्वासांसिनेजकः । नचवासांसिवासोभिर्निर्हरेन्नचवासयेदिति । निज्यात्प्रक्षालयेत् । अन्यवासांसिअन्यवासोभिर्ननिर्ह-
रेत्नमेलयेदित्यर्थः । शिल्पिन्यासोपभोगादौशिल्पिनोदण्डमाह । याज्ञवल्क्यः । वसानस्त्रीन्पणान्दण्ड्योनेजकस्तु
परांशुकम् । विक्रयावक्रयाधानयाचितेषुपणान्दशेति । नेजकोवस्त्रप्रक्षालकः । अवक्रयःकस्माच्चिद्भाटकंगृहीत्वातस्यो-
पभोगार्थंकालक्लृप्तिंविधायसमर्पणम् । आधानंबन्धकीकरणम् । याचितम् । स्वसुहृद्भ्योयाचितत्वेनदानंसुवर्णकारादिह-
स्तेकङ्कणादिनिर्माणार्थंयानिसुवर्णादीनिदत्तानितेषाम्मध्येसुवर्णेयत्परिमाणकन्दत्तन्तत्परिमाणकएवसुवर्णविकारः
शिल्पिनोग्राह्यः । रजताद्वस्तुकिञ्चिन्न्यूनाःग्राह्याः । कम्बलादयस्तुऊर्णाद्यपेक्षयाकिञ्चिदधिकाग्राह्याः । यद्येवंशि-
ल्पीनददातितदातज्ज्ञादाप्योदण्डनीयश्चेत्येतत्सर्वंमनसिनिधायाह । सएव । अग्नौसुवर्णमक्षीणंरजतेद्विपलंशते । अ-
ष्टौत्रपुणिसीसेचताम्रेपञ्चदशायसि । शतेदशपलावृद्धिरौर्णेकार्पाससौत्रिके । मध्येपञ्चपलावृद्धिस्सूक्ष्मेतुत्रिपलामताः
। कार्मिकेरोमबद्धेचत्रिंशद्भागःक्षयोमतः । नक्षयोनचवृद्धिश्चकौशेयवल्कलेषुचेति । अग्नौप्रताप्यमानमितिशेषः । श-
तपलेप्रताप्यमानेपलद्वयम् । त्रपुणिसीसेचपलाष्टकम् । ताम्रेपलपञ्चकंलोहेपलदशकंक्षीयेतइत्यर्थः । कांस्यस्यतु
त्रपुताम्रप्रभवत्वात्तदनुसारेणक्षयःकल्पनीयइतिपृथगुक्तः । स्थूलेषुऊर्णाकार्पाससूत्रेषुशतपलेषुपलदशकम् । अनति
सूक्ष्मेषुतेषुपञ्चकम् । सूक्ष्मेषुपलत्रयंवर्धतइत्यर्थः । एतदक्षप्रक्षालितविषयमित्युक्तम्मिताक्षरायाम् । कार्मिकम् ।

चित्रकर्मसूत्रनिर्मितं कार्मिकम्। यत्र निर्मिते पट्टे स्वस्तिकादि कश्चित्पक्षी वै: क्रियत इत्यर्थः। यत्र ग्रावासदो रोमाणि बध्यन्ते स
रोमबन्धः। अनयोः स्वल्पापेक्षया त्रिंशत्क्षय इत्यर्थः। इति निःक्षेपाख्यव्यवहारपदम्॥ ● ॥ अथास्वामिविक्रयाख्यं व्यवहार
पदम्। तत्स्वरूपमाह नारदः। निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वापहृत्य वा। विक्रीयतेऽसमक्षं यत्स ज्ञेयोऽस्वामिविक्रय इति॥ निः
क्षिप्तग्रहणं याचितादीनामुपलक्षणार्थम्। असमक्षं स्वामिन इति शेषः। अत एवाह व्यासः। याचितान्वाहितन्यासं हृत्वा
न्यस्य यत्क्रयणम्। विक्रीयते स्वाम्यभावे स ज्ञेयोऽस्वामिविक्रय इति। स्वाम्यभावे स्वाम्यसन्निधाने। अत्र विक्रयपदं दानबन्धक
योरप्युपलक्षणं वक्ष्यमाणकात्यायनवचने तयोरपि निवर्त्यत्वाभिधानात्। अस्वामिनं दर्शयति बृहस्पतिः। निक्षेपान्वाहि
तन्यासंहृतव्यांचितबन्धकं। उपांशु येन विक्रीतमस्वामी सोऽभिधीयत इति। निक्षेपादिग्रहणं इदं उपलक्षणम्। उपांशु अ
प्रकाशम्। प्रनष्टाधिगतादेः परद्रव्यस्योपलक्षणम्। यत आह। मनुः। विक्रीणीते परस्य स्वं योऽस्वामी स्वाम्यसम्मत इति
। यो निःक्षेपादिकं परद्रव्यं प्रकटमेव विक्रीणीते तस्याप्यस्वामित्वारम्भ स्वामिकस्य निवर्त्यत्वात्तदाह नारदः। अस्वामिना
कृतो यस्तु क्रयो विक्रय एव वा। अकृतः स तु विज्ञेयो व्यवहारेषु निश्चय इति। कात्यायनोऽपि। अस्वामिविक्रयं दानमाधिं वा विनि
वर्तयेदिति। अस्वामिविक्रयम्। अस्वामिना कृतं विक्रयम्। अस्वामिकृतत्वं दानाध्योरपि तत्साहचर्यात् अत एव यमः। अ
स्वामिना कृतो यस्तु दायो विक्रय एव वा। अकृतः स तु विज्ञेयो व्यवहारेषु निश्चय इति दायो दानं। स्वामिना अस्वामी विक्रीतं स्वकी
यं वस्तु यत्र समीपे दृष्टं तस्माद्ग्राह्यमित्याह नारदः। द्रव्यमस्वामिविक्रीतं प्राप्य स्वामी तदाप्नुयात्। प्रकाशक्रयतः शुद्धिः
क्रेतुः स्तेयं रहःक्रयामिति। याज्ञवल्क्योऽपि। स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते। हीनाद्रहो हीनमूल्ये वेलाहीने च तत्
स्करइति। स्वामी स्वसम्बन्धिद्रव्यमन्यविक्रीतं अस्वामिविक्रीतं यदि पश्यति तदा लभेत गृह्णीयात्। अस्वामिविक्रीतस्य क्रेतु
र्दोषाभावात्। क्रेतुः पुनरप्रकाशिते गोपिते क्रये दोषो भवति हीनात् द्रव्यागमोपायहीनात्। रहसि एकान्ते। हीनमूल्ये।

अल्पतरेणाद्रव्येणाधिकमूल्यक्रये । वेलाहीनेरात्र्यादौ क्रेतेक्रये च क्रेता तस्करो भवति । तस्करवद्दण्डादिभाग्भवतीत्यर्थः ।
बृहस्पतिरपि । येन क्रीतन्तु मूल्येन प्राग्राज्ञे विनिवेदितम् । न तत्र विद्यते दोषस्तेनः स्यादुपधिक्रयादिति ॥ यत्र हीनमूल्येन
क्रीयमाणं क्रयात्प्रागेव राज्ञे निवेदितं न तत्र न दोष इत्यर्थः । उपधिक्रयशब्दस्यार्थं दर्शयति स एव । अन्तर्गृहे बहिर्ग्रामान्निशा
याम सतो जनात् । हीनमूल्यञ्च यत्क्रीतं ज्ञेयोसावुपधिक्रय इति । असतो जनात् चाण्डालादेरित्यर्थः । असच्छूद्राणां दासा
दीनामुपलक्षणार्थं । अत एव नारदः । अस्वाम्यनुमताद्दासादसतश्च जनाद्गृहः । हीनमूल्यमवेलायां क्रीणंस्तद्दोषभा
ग्भवेदिति । अस्वाम्यनुमतात्स्वाम्यनुमतिहीनात् । दासग्रहणं समानन्यायत्वादस्वतंत्राणां बालादीनामुपलक्षणार्थम् । वि
ष्णुरपि । अज्ञानतः प्रकाशं यत्परद्रव्यं क्रीणीयात् । न तस्य दोषः स्वामी द्रव्यमवाप्नुयात् । यद्यप्रकाशं हीनमूल्यं वा क्रीणी
यात् । तदा क्रेता विक्रेता च चोरवच्छास्य इति । क्रेतुः प्रकाश्यविक्रयादप्यभावाद स्वामित्वान्यप्रकाशयादौ तु तथाविधविक्रयस्य
विक्रेतृस्वामित्वोक्तत्वात् तज्ज्ञानमस्तीति दुष्टत्वात् क्रेतापि दण्ड्य इत्यर्थः । स्वामिना स्वजानं ज्ञापयित्वैव तद्द्रव्यं ग्राह्यं अन्यथा चोरप्र
च्छादकत्वेन स दण्ड्य इत्याह याज्ञवल्क्यः । हृतं प्रनष्टं यो द्रव्यं परहस्तादवाप्नुयात् । अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिं प
णान् इति । यदा पुनः परहस्तादवाप्तुमसमर्थः स्वामी तदाप्याह स एव । नष्टापहृतमासाद्य हर्तारं ग्राहयेन्नरम् । देशकाला
तिपत्तौ च गृहीत्वा स्वयमर्पयेदिति । विनष्टमपहृतं वा स्वकीयं द्रव्यमधिगंतुरपहर्तुर्हस्ते वा दृष्ट्वा अधिगन्तारं अपहर्तारं वा राज
पुरुषादिभिर्ग्राहयेत् राज्ञो राजपुरुषाणाञ्च दूरदेशावस्थितौ तु विज्ञापनकालात्प्राक्पलायनादिशंकायां स्वयमेव गृहीत्वा राज्ञे स
मर्पयेदित्यर्थः । हर्तृदृष्टेनाक्रेता विवक्षित आत्मविशुद्ध्यर्थं राजदण्डाप्राप्त्यर्थञ्च इति मिताक्षरायां विज्ञानेश्वरः । नष्ट
धनस्वामिना तद्धने परस्वत्वनिवृत्तिपूर्वकस्वस्वत्वसिद्ध्यर्थं प्रथमं साक्ष्यादिभिः प्रतिग्रहादिकं साधनीयमित्याह कात्यायनः । अ
भियोक्ता धनं कुर्यात्प्रथमं ज्ञातिभिः स्वकमिति । ज्ञातिभिः साक्षिभूतैरविशेषः । साक्ष्यादिभिः स्वस्वहेतुभूतप्रतिग्रहाद्यामसाध

मेदण्डमुत्तमामाहव्यासएव । यदिस्वंनैवकुरुतेज्ञातिभिर्नाष्टिकोधनम् । प्रसङ्गविनिवृत्त्यर्थंचैवदण्डमर्हति । नाष्टिकोन
ष्टधनस्वामीप्रसङ्गःस्वत्वसन्देहः । व्यासोपि । वादीचेन्मार्गितन्द्रव्यंसाक्षिभिर्नविभावयेत् । दाप्यःस्याद्द्विगुणन्दण्डंक्रेता
तद्द्रव्यमर्हतीति । साक्षिग्रहणम्प्रमाणान्तरोपलक्षणार्थमितिकेचित् । यत्तूक्तंसाक्षिग्रहणंअस्वामीविक्रयविवादेस्वत्वसा
धनेप्रमाणान्तरनिवृत्त्यर्थमितिमदनरत्नेतदयुक्तम् । वस्तुतःस्वत्वहेतुभूतप्रतिग्रहादिस्वत्वेतत्साधकसाक्षिणामभावेदि
व्यस्यावकाशस्यविद्यमानत्वात् । अलेख्यसाक्षिकेदैवीव्यवहारेविनिर्दिशेदितिकात्यायनवचनविरोधापत्तेश्च । नचतत्र
दिव्यनिषेधकस्मृत्यभावस्तत्रदिव्यविधायकंअनुप्रकाशंचक्रयंकुर्यात्साधुभिर्ज्ञातिभिःस्वकैः । नतत्रान्याक्रियाप्रोक्तादैवि
कीनचमानुषीतिदिव्यनिषेधकस्मृतेःसत्वादितिवाच्यम् । एतद्वचनस्यक्रेत्राक्रयसाधनंसाक्षिसत्वेसाक्षिभिरेवकर्त्तव्यंना
न्यमानुषेणनदिव्येनवेत्येतत्परत्वात् । नन्वेतद्वचनस्यैतादृशविषयपरत्वेमानाभावः । नचालेख्यसाक्षिकेदैवीमितिवचनविरो
धोमानम् । तस्यसामान्यशास्त्रत्वेनैतद्वचनानुरोधेनतस्यैतदतिरिक्तविषयतायान्याय्यत्वादितिचेन्न । साक्ष्याद्यभावेदिव्यस्यच
निषेधेअनिर्णयप्रसङ्गस्यैवमानत्वात् । अन्यथास्थावरेषुविवादेषुदिव्यानिपरिवर्जयेदितिवचनस्यसाक्ष्यादिसत्वेदिव्यनि
षेधपरत्वन्त्वदभिमतन्नसिद्ध्येत् । यत्तुतेनैववक्ष्यमाणप्रमाणहीनेपादेतिवचनेप्रमाणहीनत्वापादानमपिअत्रदिव्याभाव
ज्ञापकम् । दिव्याङ्गीकरणेप्रमाणहीनतायाअसम्भवादित्युक्तन्तत्रतत्प्रमाणहीनेमानुषप्रमाणहीनेअन्यतरेणदिव्याङ्गीक
रणहीनेचेतिव्याख्येयमन्यथाअनिर्णयःस्यात् । तस्मादन्यत्रापिसाक्ष्याद्यभावेदिव्यम्भवत्येवेति । अतएवमिताक्षरायामि
त्युक्तंयदापुनःसाक्ष्यादिभिर्दिव्येनवाक्रयंनशुद्ध्यतिशोधयतीत्यादि । केचित्तुस्थावरविवादेस्थावरेषुविवादेष्वितिवचनाद्दि
व्याभावएव । एवंअकृतेपिप्रमाणहीनेपादेतिवचनाद्दिव्याभावएवमनिर्णयप्रसंगानुरोधेनवचनान्यथाकरणस्यानुचित
त्वादित्याहुस्तच्चिन्त्यम् । अदृष्टार्थत्वप्रसंगात् । याज्ञवल्क्योपि । आगमेनोपभोगेननष्टम्भाव्यमतोन्यथा । पञ्चबन्धोदम

स्तस्य राज्ञे तेनाविभावित इति । पञ्चबन्धः नष्टद्रव्यस्य पञ्चमांशसमानो दण्डः । अत्र दण्डविप्रतिपत्तिरपराधाल्पत्वमहत्त्वा
नुसारेण व्यवस्थापनीया । स्वत्वहेतवः पूर्वमेव निरूपिताः । कृतस्वकीयस्य धनस्य स्वकीयत्वानपगतिरपि दानविक्रयाभावे
साधनीयेत्याह कात्यायनः । नाष्टिकस्तु प्रकुर्वीत तज्जनं ज्ञातिभिः स्वकम् । अदत्तमत्यक्तविक्रीतं कृत्वा स्वं लभते धनमिति ॥ अर्थे
नष्टं तं सम्प्रदानभूताय विद्युक्तप्रकारेण । त्यक्तं पारितोषिकादिरूपेण । विक्रीतञ्च न भवतीति प्रमाणैः प्रसाध्य स्वकीयं धनं नष्ट
स्वामी विक्रेत्रादेः सकाशाल्लभत इत्यर्थः । राजपुरुषानीतेन क्रेत्रा यत्कर्त्तव्यं तद्दर्शयति बृहस्पतिः । पूर्वं स्वामी तु यद्द्रव्यं यद्भाग
त्यविचारयेत् । तत्र मूलं दर्शनीयं क्रेतुः शुद्धिस्ततो भवेदिति ॥ मूलमत्र यस्मात्क्रीतमसावुच्यते । शुद्धिर्योज्यत्वनिवृत्तिः अतएव
व्यासः । मूल्ये समाहृते क्रेता नाभियोज्यः कथञ्चन । मूल्येन सह वादस्तु नाष्टिकस्य विधीयत इति । समाहृते अस्मान्मया क्री
त इति निर्दिष्टे । याज्ञवल्क्योपि । विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमम् । क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी
॥ अत्र स्वामी द्रव्यमित्यभिधानं यदि विक्रेता नष्टधनस्वामिना सह विवादन्न कुर्याद्यदि वा कृते पराजयी स्यात्तदा नाष्टिकस्य स्वमि
त्वमवधारितमिति नाष्टिकादिभ्यो विक्रीतद्रव्यादीनि दातव्यानि नान्यथेति सूचनार्थं । अतएवाह बृहस्पतिः । विक्रेता दर्शि
तो यत्र हीयते व्यवहारतः । क्रेत्रे राज्ञे मूल्यदण्डौ प्रदद्यात्स्वामिने धनमिति ॥ यदा तु मूलभूतो विक्रेता देशान्तरङ्गतस्तदा कात्या
यन आह । मूलानयनकालस्तु देयो योजनसंख्ययेति । तत्र देयोध्वसंख्ययेति मदनरत्ने पाठः । यदा तु बहुकालेनापि मूलं दर्श
यितुमक्षमस्तदा साक्षिभिः क्रयसाधनं कुर्य्यादित्याह नारदमनुः । असमाहार्यमूलस्तु क्रयमेव विशोधयेत् । विशोधिते क्रये
राज्ञा न वाच्यः स न किञ्चनेति ॥ क्रये विशोधिते साक्षिभावेन प्रकाशिते सति राज्ञा न किञ्चन वक्तव्यो न दण्ड्य इत्यर्थः । यत्तु अभियो
क्ता धनं कुर्यात्प्रथमं ज्ञातिभिः स्वकम् । पश्चाद्दात्मविशुद्ध्यर्थं क्रयं क्रेता स्वबन्धुभिरिति ॥ अभियोक्ता स्वत्वे साधिते सति पश्चात्क्रेता क्र
यसाधनङ्कर्त्तव्यमित्युक्तन्तेनैवमदसमाहार्य्यमूलस्येत्यस्मादेव वचनान्मूलदर्शनाभावे मन्तव्यं । नष्टधनं स्वामी क्रीतन्तु क्रे

त्वाक्रये साधितेऽपि गृह्णीयादिति प्रदर्शनयितुमाह मनुः । अथ मूलमनाहार्यम्प्रकाशक्रयशोधितम् । अदण्ड्यो मुच्यते राज्ञा ना
ष्टिको लभते धनमिति ॥ अनाहार्यं अनानीयः । प्रकाशक्रयशोधितं नाष्टिको लभते । क्रेता त्वदण्ड्यो भूत्वा राज्ञापराधान्मुच्य
त इत्यर्थः । क्वचित्क्रेतुः सकाशाद्धनग्रहणं धर्ममूल्यं दत्त्वैवेत्याह कात्यायनः । वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः । अवि
ज्ञाताश्रयात्क्रीतं विक्रेता यत्र वा मृतः । स्वामी दत्त्वार्द्धमूल्यं तु प्रगृह्णीयात्स्वकं धनमिति ॥ वणिग्वीथीपरिगतं वणिग्वीथ्याम्प्राप्त
म् । अनेन रहःक्रयो नास्तीति दर्शितम् । विज्ञातं राजपूरुषैरित्यनेनाप्रकाशक्रयो नास्तीति दर्शितम् । अविज्ञाताश्रयात् ।
अविज्ञातस्थानकात् । यद्रहःक्रयादिरहितं सदविज्ञाताश्रयात्क्रीतं मृतविक्रेतृकम्वा तदर्द्धमूल्यं दत्त्वा ग्राह्यमित्यर्थः । उ
भयोरर्द्धहानौ कारणमाह स एव । अर्द्धं द्वयोरपहृतं तत्र स्याद्व्यवहारतः । अविज्ञातक्रयो दोषस्तथा चापरिपालनम् ॥
एतद्द्वयं समाख्यातं द्रव्यहानिकरम्बुधैरिति । हृतं नाशितम् । व्यवहारतः स्वापराधात् अविज्ञातक्रयः अविज्ञातस्थानकात्क्र
यः अपरिपालनमरक्षणम् । उपेक्षेति यावत् मरीचिरपि ॥ अविज्ञातनिवेशाच्च यत्र मूल्यं न लभ्यते । हानिस्तत्र समकल्प्या
क्रेतृनाष्टिकयोर्द्वयोरिति । यत्र क्रेता मूलोपस्थापनं करिष्यामीत्युक्त्वा पश्चात्क्रयं साधयिष्यामीति वदति तत्र मूलोपस्थापनमे
वादरणीयं न क्रयसाधनमित्याह । कात्यायनः । यदा मूलमुपन्यस्य पुनर्वादी क्रयं वदेत् । आहरन्मूलमेवासौ न क्रयेण प्र
योजनमिति ॥ यदा मूलदर्शनं क्रयप्रकाशनं वा न करोति तदा दण्ड्यतामाह स एव । अनुपस्थापयन्मूलं क्रयं वाथ विशोधयन्
। यथाभियोगं धनिने धनं दाप्यो दमञ्च सः इति । यत्तु प्रकाशितेन क्रयेण क्रेतुः स्वत्वप्रतिपादकं मरीचिवचनं वणिग्वीथीपरि
गतं विज्ञातं राजपूरुषैः । दिवा गृहीतं यत्क्रेता स तु शुद्धो लभते धनमिति ॥ यच्च मनुवचनं विक्रयाद्यो धनं किञ्चिद्गृह्णीयात्कुल
सन्निधौ । क्रयेण स विशुद्धं हि न्यायतो लभते धनमिति । तद्वचनद्वयमपि नाष्टिकस्वत्वसाधनाभावविषयं । अन्यथा अथ
मूलमनाहार्यमिति पूर्वोदाहृतमनुवचनविरोधः स्यात् । यदा तु क्रेता साक्ष्यादिभिः क्रयं न साधयति नाष्टिको वा स्वकीयत्वं तदा

निर्णयमाहबृहस्पतिः। प्रमाणहीनेवादेतुयुक्त्यापेक्ष्यान्नृपः। समन्यूनाधिकत्वेचस्वयंकुर्याद्धिनिर्णयमिति॥ अस्वामिविक्रे
तुरिवास्वाम्यदत्तंस्वाम्यनुमतिमन्तरेणोपभुञ्जानस्यदण्डमाहनारदः। उद्दिष्टमेवभोक्तव्यंस्त्रीपशुर्वसुधापिवा। अन
र्पितन्तुयोभुङ्क्तेभुक्तभोगंप्रदापयेत्॥ अनुद्दिष्टंतुयद्द्रव्यंदासःक्षेत्रगृहादिकम्। स्ववद्वेनैवभुञ्जानश्चौरवद्दण्डमर्हति। अ
नड्वाहन्तथाधेनुन्नावंवास्तथैवच। अनिर्दिष्टंतुभुञ्जानोदद्यात्पणचतुष्टयम्॥ दासीनौकातथाधुर्यौवत्सकन्नोपभुञ्जते।
उपभोक्तातुयद्द्रव्यम्पण्येनैवविशोधयेत्॥ दिवसेद्विपणान्दासीन्धेनुमष्टपणान्तथा। चयोदशांत्वनड्वाहमश्वंभूमिञ्चषोड
शःनौकामश्वाश्चधेनुञ्चचाङ्गचंकार्मिकस्यच। बलात्कारेणयोभुङ्क्तेदाप्यस्त्वष्टगुणान्दिने। उलूखलेपणार्द्धन्तुमुसलस्यप
णाद्वयं। शूर्पस्यचपणार्द्धन्तुजैमिनिर्मुनिरब्रवीदिति। पण्येनपणसमूहेनअत्रैकोधेनुश्छागामभिधत्ते। अपशेदोग्धीम
हिष्यादिकम्। कार्मिकस्यकर्मोपजीविनः। यदविज्ञातस्वामिकन्नष्टमपहृतंवाराजपुरुषैःकथंचित्प्राप्यराज्ञेसमर्पितन्त
त्स्वामीयदिवर्षमध्येआगत्यस्वत्वंसाधयतितदाप्नोतीत्याहयाज्ञवल्क्यः। शौल्किकैःस्थानपालैर्वानष्टापहृतमाहृतम्। अर्वाक्
संवत्सरात्स्वामीहरेतपरतोनृपइति। यत्तुमनुवचनम्प्रनष्टस्वामिकंद्रव्यंराजाच्यब्दंनिधापयेत्। अर्वाक्त्र्यब्दाद्धरेत्स्वामीपर
तोनृपतिर्हरेदिति। तद्दश्रुतवृत्तसम्पन्नब्राह्मणविषयमिति। मदनरत्नेब्राह्मणमात्रविषयमितिकेचित्। इत्यस्वामि
विक्रयाख्यव्यवहारपदम्॥ ०॥ अथसम्भूयसमुत्थानाख्यव्यवहारपदम्। तस्यस्वरूपमाहनारदः। वणिक्प्रभृतयोयत्र
कर्मसम्भूयकुर्वते। तत्सम्भूयसमुत्थानंव्यवहारपदंस्मृतमिति॥ वणिक्प्रभृतयइत्यनेनचट्टविक्रूटनर्त्तककर्षकादीनांग्रहणं।
यद्यपित्वयभूतस्यस्वर्गस्यचट्टत्वगामित्वाभावादात्मनेपदस्यानुपपन्नत्वेनप्रभृतिशब्देनचट्टविक्रयहणमनुचितम्। तथापिआ
त्मनेपदाविवक्षयेदमुक्तन्नचचट्टविङ्मात्रेआत्मनेपदाविवक्षणेअन्यांशेषविवक्षणेवैरूप्यप्रसंगइतिवाच्यम्। सम्भूयकर्तृ
त्वमात्रस्यलक्षणत्वेनान्यत्रवास्तवतत्त्वेपिलक्षणावैयर्थ्यप्रसक्तेनाप्रवेशात्। नचाचिन्तामणिकृताकर्त्रभिप्रायइत्यस्यकर्त्रभि

प्रायविषयेकर्त्रिच्छाविषयेक्रियाफलइतिव्याख्यानत्वादृत्विजामपिसफलंयजमानस्यकर्मभवत्वितिवेतनोपरागेणेच्छास
म्भवत्येवेत्यात्मनेपदविवक्षायामपिकाक्षतिरितिवाच्यम्। कर्त्रभिप्रायेकर्तृगामिनीत्यस्यैवव्याख्यानस्यमहाभाष्याद्यनेकग्रन्थ
सम्मतत्वेनान्यादृशव्याख्यानस्यमहाभाष्यादिविरुद्धत्वात्। सहवाणिज्यादिकरणेऽधिकारिणोदर्शयतिवृहस्पतिः। कु
लीनदक्षानलसैःप्राज्ञैर्नाणकवेदिभिः। आयव्ययज्ञैःशुचिभिःशूरैःकुर्यात्सहक्रियामिति॥ क्रियांकतुकृषिशिल्पस्तेयवाणि
ज्यरूपाम्। नाणकविज्ञानम्वाणिज्यक्रियायामुपयुज्यते। आयव्ययज्ञानमभाचंकृषिक्रियायाम्। शिल्पिक्रियायांसज्जीक्रि
याचप्राज्ञत्वम्। कर्तौकुलीनत्वप्राज्ञत्वशुचित्वानि। स्तेयेतुशूरत्वमात्रमुपयुज्यते। दक्षत्वानलसत्वेसर्वत्रोपयुज्येते। अनए
वदक्षादीन्निषेधयतिसएव। असक्तालसरोगार्त्तमंदभाग्यानिराश्रयाः। वाणिज्याद्यासहैतैस्तुनकर्त्तव्याबुधैःक्रियेति॥ निरा
श्रयाःमूलधनरहिताः। येतुसम्भूयवाणिज्यादिक्रियांकुर्वन्तितेद्रव्यानुरोधेनलाभादिभाजोभवन्तीत्याहनारदः। समोति
रिक्तोहीनोवातत्रांशोयस्ययादृशःक्षयव्ययौतथावृद्धिस्तत्रतस्यतथाविधाइति। वृहस्पतिरपि। प्रयोगंकुर्वतेयेतुहेमधान्यर
सादिना। समन्यूनाधिकैरंशैर्लाभस्तेषांयथाविधः॥ समोन्यूनोऽधिकोवांशोयेनक्षिप्तस्तथैवसः। व्ययन्दद्यात्कर्मकुर्याल्लाभं
गृह्णीतचैवहीति। यत्रपुनरस्यद्वौभागावस्यैकइतिसम्वित्कृतातत्रतदनुरोधेनव्ययलाभौप्रकल्प्यावित्याहयाज्ञवल्क्यः। स
मवायेनवणिजांलाभार्थङ्कर्मकुर्वताम्। लाभालाभौयथाद्रव्यंयथावासंविदाकृताविति। सम्भूयकारिणांकर्त्तव्यमाह। व्यासः
। समक्षमसमक्षंवावञ्चयन्तःपरस्परम्। नानापण्यानुसारास्तेप्रकुर्युःक्रयविक्रयौ। अगोपयन्तोभाण्डानिदद्युःशुल्कंचते
ध्वनिः। अन्यथाद्विगुणन्दाप्याःशुल्कस्थानाद्बहिःस्थिताइति। नारदोपि। भाण्डपिण्डव्ययोद्धारसारासारत्ववेक्षणम्।
कुर्युस्तेव्यभिचारेणसमयेस्वेव्यवस्थिताइति। अथवासर्वानुज्ञयासर्वेषांकार्य्यमेकएवकुर्य्यात्। अतएववृहस्पतिः। व
हूनांसम्मतोयस्तुदद्यादेकोधनन्नरः। करणङ्कारयेद्वापिसर्वैरेवकृतम्भवेदिति। करणंलेख्यादिकम्। सम्भूयकारिणां

मिथोविवादे निर्णयप्रकारमाह स एव । परीक्षकाः साक्षिणश्चैत एवोक्ताः परस्परम् । सन्दिग्धेऽर्थे वञ्चनायां न चेद्विद्वेषसंयु-
ताइति । यदा तु विद्वेषसंयुक्तास्तदाप्याह स एव । यः कश्चिद्वञ्चकस्तेषां विज्ञातः क्रयविक्रये । शपथैः सोपि शोध्यः स्यात्सर्ववा-
देष्वयम्विधिरिति ॥ सर्ववादेपि वचनरहितवादेपि वञ्चकत्वे सिद्धे सति किङ्कार्यमित्यपेक्षिते त्वाह । याज्ञवल्क्यः । जिह्मंत्य-
जेयुर्निर्लाभमिति । जिह्मं वञ्चकन्निर्लाभं कृत्वा त्यजेयुर्वहिः कुर्युरितरे सम्भूयकारिण इत्यर्थः । सम्भूयकारिण्यसमर्थे प्रत्याह
स एव । अशक्तोऽन्येन कारयेदिति । स्वांशानुरूपं कर्मेति शेषः । दैवराजकृतद्रव्यहानिविषये सर्वान्प्रत्याह वृहस्पतिः । द्रव्यहा-
निर्यदा तत्र दैवराजकृता भवेत् । सर्वेषामेव सा प्रोक्ता कल्पनीया यथांशत इति ॥ सम्भूयकारिभिः सर्वैरिति शेषः । क्षयहानि-
रिति पाठे क्षयायैव हानिः क्षयहानिरुपचयार्थव्यतिरिक्ता हानिरित्यर्थः । प्रातिस्विकदोषेण द्रव्यनाशे स एवाह । अनिर्दिष्टो
वार्यमाणः प्रमादाद्यस्तु नाशयेत् । तेनैव तद्भवेद्देयं सर्वेषां समवायिनामिति । अनिर्दिष्टः समवाय्यननुज्ञातः याज्ञवल्क्योपि ।
प्रतिषिद्धमनादिष्टम्प्रमादाद्यच्च नाशितम् । स तद्दद्यादिति । पालनेत्वाह स एव । विप्लवाद्यद्रक्षिताद्दशमांशभागिति । वृ-
हस्पतिरिति । दैवराजभयाद्यस्तु स्वशक्त्या परिपालयेत् । तस्यांशन्दशमं दत्वा गृह्णीयुस्तेंशतोपरमिति । तस्य तस्मै दशम-
मंशन्ते समवायिनः पालयेत् । समवायिद्रव्यमिति शेषः । अत एव कात्यायनः । चौरतः सलिलादग्नेर्द्रव्यं यस्तु समाहरेत् । त-
स्यांशो दशमो देयः सर्वद्रव्येष्वयं विधिरिति । समाहरेत्स्वशक्त्या प्रत्याहरेदित्यर्थः । नारदोपि । दैवतस्कररा जाग्न्यव्यसने
समुपस्थिते । यस्तत्स्वशक्त्या रक्षेत तस्यांशो दशमः स्मृत इति । यस्तु समवायिद्रव्यं समवायिभिः सह प्रतियाचनादिना न साधय-
ति तस्य लाभहानिरित्याह वृहस्पतिः । समवेतैस्तु यद्दत्तं प्रार्थनीयन्तथैव तत् । न याचते च यः कश्चिल्लाभात्स परिहीयत इति ॥
याचनग्रहणं येन यत्कर्म स्वांशानुरूपं कर्तव्यन्तस्याप्युपलक्षणार्थं तेन तत्कर्माकरणेपि लाभहानिरित्यस्मादेव वचनात्प्रतिपत्त-
व्यमिति स्मृतिचन्द्रिकायाम् । सम्भूयकारिणां ऋत्विजाङ्कर्तव्यमाह मनुः । ऋत्विजः समवेतास्तु यथा सत्रे निमन्त्रिताः । कु-

युर्यथार्हं तत्कर्म गृह्णीयुर्दक्षिणां तथेति॥ अत्र सचशब्दो यजमानमात्रविवक्षया प्रयुक्तो न पुनर्वैश्ययजमानकसत्राख्ययज्ञविशेषाभि
वक्षया। तत्र यजमानानामेवाध्वर्य्वादिकर्मकारित्वे दक्षिणार्हाणामृत्विजामभावात्। तथा कर्मानुसारेण दक्षिणां गृह्णीयुरित्य
र्थः। तथा च स एव। संभूय स्वानि कर्माणि कुर्वद्भिरिह मानवैः। अनेन कर्मयोगेन कर्त्तव्यांशप्रकल्पनेति॥ स्वानि कर्माणि स्वयमन
तिरिक्तानीति शेषः। इयं चांशकल्पना द्वादशशतं गावो दक्षिणेत्येवं क्रतुसम्बन्धित्वेन विधीयमानायां दक्षिणायामेव न त्वृ
त्विग्विशेषोल्लेखनेन विहितायाः तद्विधायकश्रुतिविरोधापत्तेः अत एवाह तमेव बृहस्पतिः। रथं हरेत्तथाध्वर्युर्ब्रह्माधाने च वाजिनं
। होता निविद्वरं चाश्वमुद्गाता चाप्यनः क्रये इति। निविद्वरं निविच्छंसनस्थवरं उद्गाता शकटेनोद्गातृगणमध्यस्थः सुब्रह्म
ण्यो गृह्णातु इति मदनरत्ने अनः शकटम्। क्रये सोमक्रये। दक्षिणांशकल्पनायाः प्रकारमाह तमेव बृहस्पतिः। सर्वेषामर्द्धि
नो मुख्यास्तदर्द्धेनार्द्धिनोऽपरे। तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिन इति। सर्वेषां षोडशानामृत्विजां मध्ये मुख्या ग्र
ह्यायाः होतृब्रह्माऽध्वर्यूद्गातारोऽर्द्धिनः उक्तदक्षिणायाः किञ्चिन्न्यूनमर्द्धं गृह्णीयुः। समार्द्धं यद्यपि वक्ष्यमाणविभागकल्पना
विरोधः स्यात्। अपरे द्वितीया मैत्रावरुणप्रतिप्रस्थातृब्राह्मणाच्छंसिप्रस्तोतारस्तदर्द्धं मुख्यभागार्द्धं नार्द्धिनोऽर्द्धग्राहिणः तृ
तीयिनोऽच्छावाकाग्नीध्रनेष्टप्रतिहर्त्तारो मुख्यभागस्य तृतीयांशभाजः। पादिनोऽन्त्याः ग्रावस्तुन्नेतृपोतृसुब्रह्मण्या मुख्यभाग
स्य चतुर्थांशग्राहिण इत्यर्थः॥ मुख्यानां चतुर्णां मिथो विभागः समः एवं द्वितीयादीनामपि स एव विभागः तथा च गोशतं दक्षि
णेति पक्षमाश्रित्य कात्यायनसूत्रम्। द्वादश द्वादशेभ्यः षट् षट् द्वितीयेभ्यश्चतस्रश्चतस्रस्तृतीयेभ्यस्तिस्रस्तिस्र इतरेभ्य इ
ति। संगृहीतमेतद्बौधायनकारिकायामपि। पञ्चविंशतिधा कृत्वा वर्गीयां दक्षिणां क्रमात्। द्वादशैवाथ षट्कं च तस्र एव चेति
। द्वादशाधिकगोशतरूपायां दक्षिणायाः प्रथमं चत्वारो भागाः कर्त्तव्याः। तत्रैको भागो होतृवर्गस्यापरो ब्रह्मवर्गस्यापरोऽध्वर्युवर्ग
स्यापर उद्गातृवर्गस्य। पुनरेकैकस्य भागस्य पञ्चविंशतिर्भागाः कर्त्तव्याः। तेषां मध्ये होत्रादीनां द्वादश भागाः द्वितीयिनां च

ष्टतृतीयानाञ्चार्धञ्चतुर्थानाञ्चेत्यर्थः । पञ्चवत्त्वादेस्तु विषमविभागानभिधानात् । समंस्यादश्रुतत्वादिति न्यायेन समत्वेन
वविभाग इति मन्तव्यम् । स्वकीयकर्मकलायांशकर्तृकलतानुसारेण भागो देय इत्याह मनुः । ऋत्विग्यदि वृतो यज्ञे स्वकर्म परि
त्यापयेत् । तस्य कर्मानुरूपेण देयोंऽशः सहकर्तृभिरिति । सहकर्तृभिः सम्भूयकारिभिरित्यर्थः । यद्वा कर्तृभिः सह देयः दक्षि
णाकाले देयो यजमानेनेत्यर्थः । अथवा कर्मपरित्यक्तं सकर्तृभिरित्यर्थः । यदा तु ऋत्विक्कर्मैकदेशं दक्षिणादानानन्तरं व्यक
तितदाऽवशिष्टं तद्द्रव्यार्जितं नामध्येसन्निहितेनान्येन कारयेदित्याह स एव । दक्षिणासु च दत्तासु स्वकर्म परिहापयेत् । कृत्स्न
मेव लभेतांशमन्येनैव च कारयेदिति । कर्ममध्ये ऋत्विङ्मरणे कर्तव्यमाह नारदः । ऋत्विग्याज्यमसनेऽप्येवमन्येन कर्म निस्तरेत् । ल
भेत दक्षिणादानं सतस्मात्संप्रकल्पितमिति । अन्येन स्वसगणमध्यवर्जितं नामध्ये प्रत्यासन्नेन येन केनचिदन्येन कार्यमाशौचा
द्यर्थादि समाख्याबाधापत्तेरिति ध्येयम् । यत्तु शङ्खलिखितयोर्वचनम् । अथ चेदनुप्राप्ते सवने ऋत्विक् म्रियते तस्य सगोत्रो
यशिष्यो वा तत्कार्यमनुपूरयेत् । अथ चेद्वान्यवसत्तोऽन्यमृत्विजं वृणुयादिति । यच्च बृहस्पतिवचनम् । एवं क्रियाप्रवृत्तानां
यदाकश्चिद्विपद्यते । तदंशं धुनाक्रियाकार्यो सर्वैर्वा सहकारिभिरिति ॥ तदेकान्तरगत्वरहितर्त्विक्कर्तृकदर्शपूर्णमासादिया
गविषयमित्यभिहितं स्मृतिचन्द्रिकायाम् । जीवत्येव तु ऋत्विजि यजमानेन ऋत्विगन्तरकरणे कस्य दक्षिणेति वीक्षायामाह
शङ्खः । अथ ऋत्विजि वृते पश्चादन्यं वृणुयात्पूर्वाहूतस्यैव दक्षिणा पश्चादाहूतः किञ्चिल्लभत इति । यदा तु कारणमृत्विग्या
ज्यन्यजतियाज्यो वा ऋत्विजं तदा तयोर्दण्डमाह मनुः । ऋत्विजं यस्त्यजेद्याज्यो याज्यं चर्त्विक् त्यजेद्यदि । शक्तं कर्मण्य
दुष्टं तयोर्दण्डः शतं शतमिति । नारदोऽपि । ऋत्विक्त्रिविधो दृष्टः पूर्वजुष्टः स्वयंकृतः । यदृच्छया च यः कुर्यादार्त्विज्य
म्प्रीतिपूर्वकम् । ऋत्विग्याज्यमदुष्टं यस्त्यजेदनपकारिणम् । अदुष्टश्चर्त्विजं याज्यो विनेयौ तावुभावपीति । येऽकविसाधने स्व
समानास्तैः सह कार्यकार्यैत्याह बृहस्पतिः । वाह्यकर्षकबीजाद्यैः क्षेत्रोपकरणेन च । ये समानास्तु तैः सार्द्धं कृषिः कार्या विजानता

नेति। वाह्याः वाहनादिवाहकाः बलिवर्दाः। कृष्याः कर्षकाः कृष्यर्थे स्वीकृताः पुरुषाः। आदिशब्देन कृषिसाधनानामन्येषां ग्रह
णम्। सम्भूयकारिणां कृषिकाणां कर्तव्यमाह बृहस्पतिः। पर्वते नगराभ्यासे तथा राजपथस्य च। ऊषरं मूषकव्याप्तं क्षेत्रं यत्नेन
वर्जयेदिति। पर्वते पर्वतसमीपे कल्पतरुकृतानुविवीत इति पठित्वा विवीतशब्देन यवसाद्यर्थं रक्षितः प्रदेश इति व्याख्यातम्। न
गराभ्यासे नगरसमीपे। राजपथस्य समीप इति शेषः। एतदुक्तं भवति। पर्वतादीनासन्नमनासन्नमपि ऊषरं मूषकव्याप्तं
क्षेत्रं वर्जयेदिति। वाह्योऽपि वर्जनीय इत्याह स एव। कृशातिवृद्धं क्षुद्रग्नं रोगिणं सम्प्रपलायिनम्। काणं खंजञ्च नादद्याद्वाह्य
म्प्राज्ञः कृषीवल इति। काणः एकाक्षः खंजः भग्नचरणः कश्चिदत्रैकस्य हानिमाह स एव। वाह्यवीजात्ययाद्यस्य क्षेत्रहानिः प्रजा
यते। तेनैव सा प्रदातव्या सर्वेषां कृषिजीविनामिति। सम्भूयकारिणामिति शेषः। वाह्यवीजग्रहणं कृषिसाधनानामुपलक्षणा
र्थं। सम्भूयकारिणां शिल्पिनां स्वरूपं दर्शयंस्तेषां लाभविभागेंशपरिकल्पनाप्रकारमाह स एव। हिरण्यकुप्यसूत्राणां काष्ठपा
षाणचर्मणाम्। संस्कर्त्ता तत्कलाभिज्ञः शिल्पी प्रोक्तो मनीषिभिः। हेमकारादयो यत्र शिल्पं सम्भूय कुर्वते। कर्मानुरूपं निर्वेशं
लभेरंस्ते यथांशत इति॥ कुप्यं हेमरूप्यव्यतिरिक्तं त्रपुसीसादिकं। हेमरूप्य इति प्रस्तुतत्वनाभ्यां यदन्यत्तत्कुप्यमित्यमरसिंहेनो
क्तत्वात्। निर्वेशो भृतिः॥ कात्यायनोऽपि। शिक्षकाभिज्ञकुशला आचार्याश्चेति शिल्पिनः। एकद्वित्रिचतुर्भागान्हरेयुस्ते यथोत्तर
मिति हर्म्यादिनिर्मातॄणां मध्ये मुख्ये भागद्वयमाह बृहस्पतिः। हर्म्यं देवगृहं वापि वाचिकोपस्कराणि च। संभूय कुर्वतां तेषां प्रमुखो
द्व्यंशमर्हतीति। नर्तकेष्वपि मुख्यस्यांशद्वयभागित्वमतिदिशन्विशेषान्तरमप्याह स एव। नर्तकानामेष एव धर्मः सद्भिरुदाहृतः
तालज्ञो लभतेऽध्यर्द्धं गायनास्तु समांशिन इति। अध्यर्द्धं सार्द्धं अधिकमेकमंशं। संभूयकारिणां चौराणां लाभभागेंशपरिकल्पनाप्रकार
माह कात्यायनः। परराष्ट्राद्धनं यत्स्याच्चौरैः स्वाम्याज्ञयाहृतं। राज्ञे दत्वांशमुद्धृत्य विभजेरन्यथाविधि। चौराणां मुख्यभूतस्तु च
तुरोंशांस्ततो हरेत्। शूरोंशांस्त्रीन्समर्थो द्वौ शेषास्त्वेकैकमेव चेति। एतद्धनं दुर्बलवैरिदेशादाहृतविषयम्। प्रबलतरवैरिदे

त्यादीनि स्मृत्यन्तरोक्तवचनानि सुतस्यादेयत्वप्रतिपादकानि एकपुत्रविषयाणीति ज्ञेयानि अनेकपुत्रेष्वपि मातापितृवियोगस
हनाक्षम एव देयः । अत एव कात्यायनः । विक्रयं चैव दानं च न नेयाः स्युरनिच्छवः । दाराः पुत्राश्चेति यथा दाराः पुत्राश्च विक्रय
न्दानमन्वाभर्त्तानन नयेत्तथा मातापितृभ्यां पुत्रोऽपि मातापितृवियोगानिच्छवो न नेया इत्यर्थ उक्तः स्मृतिचन्द्रिकायाम् । न नेयाः स्युर
निच्छव इत्येतदनापद्विषयं । आपत्काले तु कर्तव्यं दानं विक्रयमेव वा । अन्यथा न प्रवर्तेत इति शास्त्रविनिश्चय इति ॥ तानेवा
धिकृत्य तेनैवाभिधानात् । मात्रापि पत्यनुज्ञया देयमित्याह विष्णुः । न तु स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्तुरिति
। अन्वाहितादिवस्त्रीधनमदेयम् । अत एव दक्षः । सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम् । अन्वाहितं च निःक्षेपः सर्व
स्वं चान्वये सति ॥ आपत्स्वपि न देयानि नव वस्तूनि पण्डितैः । यो ददाति स मूढात्मा प्रायश्चित्तीयते नर इति । अदेयदाने प्रति
ग्रहे च दण्डमाह मनुः । अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति । तावुभौ चौरवच्छास्यौ दाप्यौ चोत्तमसाहसमिति । अदे
यग्रहणमदत्तस्याप्युपलक्षणार्थम् । अत एव नारदः । गृह्णात्यदत्तं यो मोहाद्यश्चादेयं प्रयच्छति । दण्डनीयावुभावेतौ ध
र्मज्ञेन महीक्षितेति ॥ अदत्तादेयग्रहणाद्गृहीतस्य प्रत्यर्पणमपि कार्यमिति गम्यते । अदत्तग्रहणे दाने च दानसिद्ध्यभावा
त्परस्वत्वानुत्पत्तेरित्युक्तं स्मृतिचन्द्रिकायाम् । देयस्वरूपमाह स एव । कुटुम्बभरणाद्द्रव्यं यत्किंचिदतिरिच्यते । तद्देयमुप
हृत्यान्यन्न तद्दायमवाप्नुयादिति । अन्यदुपहृत्य भर्तव्यकुटुम्बमनवसाद्येत्यर्थः । उपरोधश्च भोजनाच्छादनादिराहित्यनिबन्ध
नतोऽत्राभिमतो न तु ताम्बूलादिभोगसाधनवैकल्यनिबन्धनः । अत एव बृहस्पतिः । कुटुम्बभक्तवसनाद्देयं यदतिरिच्यत इ
ति । भक्तं भोजनं वसनं आच्छादनम् । भक्तवसनाद्यदतिरिच्यत इत्यन्वयः । याज्ञवल्क्योऽपि । स्वं कुटुम्बाविरोधेन देयं दारसुता
दृते इति । कुटुम्बाविरोधेन कुटुम्बानुरोधेन कुटुम्बभरणावशिष्टं स्वं देयमित्यर्थः । स्थावरविषये देयमाहतुः प्रजापतिबृह
स्पती । स्वग्रामाद्गृहक्षेत्राद्युद्ध्यैर्न प्रदीयते । पित्र्यमायस्वयंप्राप्तं न तद्दातव्यं विवक्षितमिति ॥ स्वग्रामागमात्पूर्वं क्रमप्राप्तविधा

गमयुक्तात्। क्षेत्रग्रहणमुपलक्षणम्। पित्र्यं वंशपरम्परायातम्। स्वयम्प्राप्तं स्वयमर्जितम्। पित्र्यं स्वयम्प्राप्तयोः रूपादानं की
नादीनामुपलक्षणार्थम्। पित्र्यं वा स्वयम्प्राप्तं वा यद्गृहक्षेत्रादिकम्प्रदीयते तत्सप्नागमान्विताद्गृहक्षेत्रादुद्धृत्य दातव्यमिति स्मृ
तिशास्त्रमभिप्रेतमित्यर्थः। अत्र सप्नागमाद्गृहक्षेत्रादित्यभिधानं गृहक्षेत्रादिदानं कुटुम्बपर्याप्तसागमके गृहक्षेत्राद्यन्तरे स
व्येष्वनान्ययेत्येवमर्थम्। अनुकल्पायेनेनोक्तं। सर्वस्वं गृहवर्जं तु कुटुम्बभरणाधिकम्। यद्द्रव्यन्तत्स्वकन्देयमदेयं स्यादतोऽन्य
थेति। तद्गृहाद्यन्तराभावविषयम्। स्वकं स्वकीयम्। यथेष्टविनियोगार्हद्रव्यमिति यावत्। स्वयंप्राप्तं त्वविभक्तधनैर्भ्रातृभि
रननुज्ञातमपि देयम्। स्वेच्छादेयं स्वयंप्राप्तमन्वाधारे तु वन्धकमिति वृहस्पतिस्मरणात्। स्वेच्छादेयं भ्रात्राद्यनुज्ञामन्तरे
णापि देयम्। वन्धकमन्वाधारे णाधिरूपेणादेयमित्यर्थः। यत्तु तेनैवोक्तं। विभक्ता अविभक्ता वा दायादाः स्थावरे समाः। एको
ऽप्यनीशः सर्वत्र दानाधमनविक्रये इति। तत्समानाधिकाविभक्तस्थावरविषयम्। आधमनमाधीकरणं विभक्ता अपि स्थावरे स
माः किमुताविभक्ता इति दण्डापूपन्यायेन व्याख्येयम्। अन्यथा विभागो निरर्थकः स्यात्। अतश्च यदुक्तं स्मृत्यन्तरे। एकोऽपि स्थाव
रे कुर्य्याद्दानाधमनविक्रयम्। आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषत इति। तत्क्रमायातविभक्तस्थावरविषयं सप्नानधिकस्थावर
विषयं चेति मन्तव्यम्। स्वार्जितमपि किञ्चित्प्राप्तव्यवहारेषु पुत्रेषु सत्सु तदनुमत्यैव दातव्यमित्यभिप्रेत्याह भगवान्व्यासः। स्था
वरं द्विपदञ्चैव यद्यपि स्वयमार्जितं। असम्भूय सुतान्सर्वान्न दानन्न च विक्रयः॥ ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः। वृ
त्तिञ्च तेऽभिकाङ्क्षन्ति न दानन्न च विक्रय इति। अत्रोत्तरपदम्पूर्वं प्रदर्शितवृहस्पतिवचनार्थस्य दण्डापूपन्यायप्रदर्शनेन दृ
ढीकरणार्थम्। किञ्चिद्द्रव्यं पाप्यनुज्ञातमेव देयम्। किन्तु मुख्येनापि भ्रात्राद्यनुज्ञातमेव देयम्। तथा च वृहस्पतिः। सौदायिकं
क्रमायातं शौर्य्यप्राप्तं च यद्भवेत्। स्त्रीज्ञातिस्वाम्यनुज्ञातं दत्तं सिद्धिमवाप्नुयादिति। सौदायिकं वैवाहिकं श्वश्वाः परिणयनेऽस्य
नास्याः अनुज्ञयैव दातव्यम्। क्रमायातम्पितृपितामहादिक्रमायातम्। स्त्रीज्ञात्यनुमतं न स्वकन्देयम्। वैवाहिके क्रमायाते च

वेदान्तविद्युतवृत्तिने नैवेशान्वाद् । देयो लिपिप्रसङ्गेन प्रतिग्रहे प्रकारविशेषं दर्शयति याज्ञवल्क्यः । प्रतिग्रहः प्रकाशः स्यात् स्थाव
रस्य विशेषत इति । प्रकाशः प्रकटः ससाक्षिक इति यावत् । पूर्वप्रतिग्रहे प्रकारविशेष उक्तो ऽमित्रेन । पुत्रं मह्यं स्थावरं धुना
ग्रहणञ्च अनिषाधवृत्तिदेशनस्य मध्ये व्यासूत्रिजेन्दुताऽवृत्त यथ ममात्मनिहृष्टमेकं गृह्णीयादिति ॥ अदूरबान्धवं सन्निहि
तमातुलादिबान्धवं च सन्निकृष्टं असन्निकृष्टं भ्रातृपुत्रादि रिक्थिनं नामैव प्रतिगृह्णीयादित्यर्थः । प्रासङ्गिकमुक्त्वा प्रकृतमप्याह
याज्ञवल्क्यः । देयं प्रतिश्रुतं चैव दत्त्वा नापहरेत् पुनरिति । इदं न्यायदास्यामीति यत्प्रतिश्रुतं तदवश्यं तस्मै दातव्यं यदि धर्म्मोपयु
क्तो भवति । प्रतिश्रुते पुनर्न दातव्यं प्रतिश्रुत्याप्यधर्म्मसंयुक्ताय न दद्यादिति गौतमस्मरणात् । दत्त्वा नापहरेत् पुनः । न्यायमा
र्गेण यद्दत्तं सम्प्रविधमपि पुनर्नापहर्त्तव्यम् । किन्तु नयेदानुमन्तव्यमित्यर्थः । यः पुनः प्रतिश्रुत्य न ददाति दत्तं वाऽपहरति त
स्य दोषमाह हारीतः । प्रतिश्रुतार्थादानेन दत्तस्य च्छेदनेन च । विविधान्नरकान्याति तिर्यग्योनौ च जायते । वाचैव यत्प्रति
ज्ञातं कर्म्मणा नोपपादितं । ऋणं तद्धर्म्मसंयुक्तमिह लोके परत्र चेति । यद्धर्म्मसंयुक्तं प्रतिगृहीतुः प्रवृत्तधर्म्मसम्पादकं ये
वाचा प्रतिज्ञातं न पश्चादर्पितं तत् इह परत्र च ऋणवदनपैतीत्यर्थः । प्रतिश्रुतमददद्दाज्ञानतस्त्वाप्नोति दण्डं चेत्याह कात्यायनः । स्वे
च्छया यः प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम् । न ददाति ऋणं दाप्यः प्राप्नुयात् पूर्वसाहसमिति ॥ मत्स्यपुराणेपि । प्रतिश्रुत्याप्रदाता
रं सुवर्णं दण्डयेन्नृप इति । अनयोर्दण्डयोरपराधानुसारेण व्यवस्था । दत्तं सप्तविधमदत्तं षोडशप्रकारमित्याह नारदः ।
दत्तं सप्तविधं ह्येयमदत्तं षोडशात्मकमिति । तत्र दत्तभेदानाह स एव । पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः । स्त्रीशुल्का
नुग्रहार्थञ्च दत्तं दानविदो विदुरिति । पण्यमूल्यं क्रीतद्रव्यस्य मूल्यम् । भृतिस्वरूपं कात्यायनेन दर्शितम् । अविज्ञातोपलब्ध्य
र्थं तानयर्थानिरूपितम् । उपकर्मक्रियायाः सा भृतिः परिकीर्त्तितेति । प्रयोजनक्रियासम्पादनार्थं भृतिरिष्यत इत्यर्थः । तु
ष्ट्या परितोषेण बन्दिप्रभृतिभ्यो दत्तमित्यर्थः । स्नेहात् पुत्रदुहित्रादिभ्यो दत्तम् । प्रत्युपकारतः कृतोपकाराय प्रत्युपकारित्वा

द्त्तम्। तत्प्रदर्शनार्थमाह कात्यायनः। भयत्राणोपकारार्थं तथा कार्य्यप्रसाधनात्। अनेन विधिना लब्धं भयत्राणादिकं धनं। उपकारकरणेन लब्धमिति यावत्। स्त्रीशुल्कं विवाहार्थं कन्याबन्धुभ्यो दत्तं। अनुग्रहार्थं परोपकारः कर्त्तव्य इति विधिबलात्तच्च कृत्वाप्यनुग्रहार्थं दत्तं सफलं भवतीति दर्शयितुं नारद आह। मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि। दीनानाथविशिष्टेभ्यो दत्तं तु सफलं भवेदिति॥ उपकारिणि परोपकारे सफलं फलातिशयोपेतमित्यर्थः। तदेतत्पण्यादि सप्तविधं द्रव्यमेव दानविदो विदुः अपवर्त्तनीयमिति विदुरित्यर्थः। बृहस्पतिरपि। भृतिस्तुष्ट्या पण्यमूल्यं स्त्रीशुल्कमुपकारिणे। श्रद्धानुग्रहसंप्रीत्यादत्तं सप्तविधं विदुरिति॥ अदत्तानि दर्शयति नारदः। अदत्तं तु भयक्रोधशोकवेगरुगन्वितैः। तथोत्कोचपरीहासव्यत्यासच्छलयोगतः। बालमूढास्वतन्त्रार्त्तमत्तोन्मत्तापवर्ज्जितं। कर्त्ता ममायं कर्म्मेति प्रतिलाभेच्छया च यत्। अपात्रे पात्रमित्युक्ते कार्य्ये वाधर्म्मसंहिते। यद्दत्तं स्यादविज्ञानाददत्तमिति तत्स्मृतमिति। रुक् उपतापः भयादिकृतो य उपतापस्तदन्वितैरित्यन्वयः। अपवर्ज्जितन्दत्तं बालादिभिरपवर्ज्जितमित्यन्वयः। एतदुक्तं भवति भयोपपन्नेन वन्दिग्राहादिभ्यो दत्तं क्रोधोपपन्नेन क्रोधविषयीभूतानाम्पुत्रभ्रात्रादीनां व्यथां कर्त्तुमितरेभ्यो दत्तम्। पुत्रादिवियोगजनितशोकवेगादुपपन्नेन किं स्थितेन धनेनेति तात्कालिकया बुद्ध्या दत्तम्। उत्कोचेन राजकीयादिभ्यो दत्तम्। उपहासेन दत्तम्। व्यत्यासेन एकः स्वद्रव्यमन्यस्मै ददाति अन्योपि स्वीयन्तस्मै ददातीति दानव्यत्यासेन दत्तं। छलयोगतः शतदानमभिसन्धाय सहस्रमिति परिभाष्य दत्तम्। बालेनाप्राप्तव्यवहारेण दत्तम्। मूढेन लोकवेदानभिज्ञेन दत्तं। अस्वतन्त्रेण दासादिना दत्तं। आर्त्तेन रोगोपहतेन दत्तं। मत्तेन धुस्तूरादिभक्षणादिना मत्तेन दत्तं। उन्मत्तेन वातपित्तादिदोषोद्रेकादिना चलितधिया दत्तम्। अयं मदीयं कर्म्म करिष्यतीति प्रतिलाभेच्छया प्रतिलाभमकुर्व्वाणाय दत्तं। अपात्रायायोग्याय योग्योऽहमित्युक्तिमात्रेण दत्तं। यज्ञादिं करिष्यामीत्युक्त्वा धनं गृहीत्वा द्यूतादिकर्म्मणि विनियुञ्जानाय दत्तं इत्येवं षोडशप्रकारमपि दत्तम्पुनःप्रत्याहरणीयत्वाददत्तमुच्यत इत्यर्थः। पुनःप्रत्याहरणीयत्वमेव तद्विधानमाह का

त्यायनः। कामक्रोधास्वतन्त्रार्त्तक्लीबोन्मत्तप्रमोहितैः। व्यत्यासपरिहासाद्य यद्दत्तन्तत्पुनर्हरेत्॥ यातु कार्यप्रसिद्ध्यर्थमुत्कोचास्यात्प्रतिक्रिया। तस्मिन्नपि प्रसिद्धेऽर्थे न देया स्यात्कथञ्चन॥ अथ प्रागेव दत्ता स्यात्प्रतिदाप्यस्ततो बलात्। दण्डं चैकादशगुणमाहुर्गार्गीयमानवा इति॥ उत्कोचास्वरूपमाह स एव। स्तेयसाहसिकोद्वृत्तपारदारिकशंसनात्। दर्शनाद्वृत्तनष्टस्य तथासत्यप्रवर्त्तनात्। प्राप्तमेतैस्तु यत्किञ्चिदुत्कोचाख्यन्तदुच्यते। न दाता तत्र दण्ड्यः स्यान्मध्यस्थश्चैव दोषभागिति॥ एतदुक्तम्भवति यदि मह्यं न प्रयच्छसि तदा त्वत्कृतं स्तेयादि कथयामीति भीतिमुत्पाद्य स्तेयादिकर्तृसकाशाद्धनमादत्ते। तथा त्वं यदि न मह्यं प्रयच्छसि तदा पलायमानं त्वां दर्शयामीति भीतिमुत्पाद्य पलायिनः सकाशाद्यत्किञ्चिदादत्ते। तथा नवसत्यमपि स्वामिनिकटेऽसत्यमिति वदिष्यामीत्युक्त्वा यत्किञ्चिदादत्ते तदुत्कोचाख्यं तद्ग्राहाद्दात्रे दाप्यं उत्कोचापादकयाहुकोचदण्डनीयाविति। पुनः प्रत्याहरणीयमिति बृहस्पतिरप्याह। प्रतिलाभेच्छया दत्तमपात्रे पात्रशङ्कया। कार्ये वा धर्मसंयुक्ते स्वामी तत्पुनराप्नुयादिति। आर्त्तेदत्तस्यादत्तत्वं धर्मकार्यव्यतिरिक्तविषयम्। तथा च कात्यायनः। स्वस्थेनार्त्तेन वा दत्तं श्रावितं धर्मकारणात्। अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशय इति। मनुरप्युपाधिकदानादेर्निवर्त्तनमाह। योगाधमनविक्रीतं योगदानप्रतिग्रहम्। यस्य वाप्युपधिम्पश्येत्तत्सर्वं विनिवर्त्तयेदिति। योग उपाधिः येनागामिनोपाधिविशेषेणाधिविक्रयादानप्रतिग्रहाः कृतास्तदुपाधिविगमे तं सर्वमपि निवर्त्तयेदित्यर्थः॥ इति दत्ताप्रदानिकाख्यव्यवहारपदम्॥ ७ ॥ अथाभ्युपेत्याशुश्रूषाख्यव्यवहारपदम्। तस्य स्वरूपमाह नारदः॥ अभ्युपेत्य च शुश्रूषां यस्तां न प्रतिपद्यते। अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यत इति॥ शुश्रूषा माज्ञाकारित्वम्। तत्र पञ्चविधः शुश्रूषकः। शिष्यः अन्तेवासी भृतकः अधिकर्म्मकृत् दासश्चेति। तेषाम्मध्ये दासभिन्नाः कर्म्मकराः। ते च शुभकर्मकृतः। दासाः पुनः पञ्चदशविधा गृहजातादिभेदेन ते त्वशुभकर्म्मकृतः। तदेतत्सर्वं मनसि निधाय स एवाह। शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः। चतुर्विधः कर्मकरस्तेषां दासास्त्रिपञ्चकाः॥ शिष्यान्तेवासिभृ

तकाश्चतुर्थस्त्वधिकर्मकृत्। एते कर्मकरा ज्ञेया दासास्तु गृहजादयः॥ सामान्यमस्वतन्त्रत्वमेषामाहुर्मनीषिणः॥ जाति
कर्मकृतस्तूक्तो विशेषो वृत्तिरेव तथा। कर्मापि द्विविधं ज्ञेयमशुभं शुभमेव च। अशुभं दासकर्मोक्तं शुभं कर्मकृतां स्मृतम्॥ गृ
हद्वाराशुचिस्थानरथ्यावस्करशोधनम्। गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम्॥ इच्छतः स्वामिनश्चाङ्गैरुपस्थान
मथान्ततः। अशुभं कर्म विज्ञेयं शुभमन्यदतः परमिति॥ तेषामिति निर्द्धारणे षष्ठी। त्रिपञ्चकाः पञ्चदश। शिष्यो वेदवि
द्यार्थी। अन्तेवासी शिल्पशिक्षार्थी। मूल्येन यः कर्म करोति स भृतकः। अधिकर्मकृत्। कर्म कुर्वतामधिष्ठाता। वृत्तितः
जीवनोपायतः। अशुचिस्थानमुच्छिष्टप्रक्षेपणार्थं गर्त्तादिकम्। अवस्करो गृहमार्जितपांश्वादिनिचयस्थानम्। चतुर्भिर
पि गृहद्वारादिभिः शोधनपदं सम्बध्यते। उज्झनं त्यागः। अन्ततः स्वामिनः। इच्छतः स्वाम्यनुज्ञया मूत्रपुरीषादिस्थाने निर्मा
र्जनार्थमङ्गैरुपस्थानं हस्ताद्यर्पणं तेषां कर्मकराणां दासानाञ्चास्वतन्त्रत्वलक्षणं धर्मं मनीषिणः साधारणमाहुः। जाति
कर्मकृतः कर्मकृतो वृत्तिकृतश्च विशेषः शिष्यान्तेवासिनामेवोक्त इत्यर्थः। तत्र शिष्याणां त्रैवर्णिकान्यतमलक्षणो जातिकृतो
विशेषो वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यादिशास्त्रसिद्धोऽवगन्तव्यः। कर्मकृतविशेषं त्वाह बृहस्पतिः। विद्या त्रयी समाख्याता
ऋग्यजुःसामलक्षणा। तदर्थं गुरुशुश्रूषां प्रकुर्याच्छास्त्रचोदितामिति॥ शिष्य इति शेषः। तथा च नारदः। आविद्याग्रह
णाच्छिष्यः शुश्रूषेत्प्रयतो गुरुम्। तद्वृत्तिर्गुरुदारेषु गुरुपुत्रे तथैव चेति। वृत्तितो विशेषमाह स एव। समावृत्तश्च गुरवे प्र
दाय गुरुदक्षिणाम्। प्रतीयात्स्वगृहानेषा शिष्यवृत्तिरुदाहृतेति। वृत्तिरत्र धर्मः। मनुरपि। प्रतिगृह्येप्सितं दण्डमुपस्था
य च भास्करम्। प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि॥ भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः। भवन्मध्यन्तु राजन्यो
वैश्यस्तु भवदुत्तरमिति॥ कः पुनरन्तेवासिनां जातिकर्मकृतो विशेष इत्यपेक्षिते बृहस्पतिराह। विज्ञानमुच्यते शिल्पं हेमकुप्यादि
संस्कृतिः। नृत्यादिकञ्च तत्प्राप्तुं कुर्यात्कर्म गुरोर्गृह इति। कङ्कणकटकादिनिर्माणविषयं नृत्यगीतादिकरणविषयञ्च

दिग्रहात् स्तम्भकुम्भादिविरचनविषयम् । विज्ञानं शिल्पविज्ञानमुच्यते तत्प्राप्त्यर्थं अन्तेवासी गुरोर्गृहे कङ्कणकरणादि कुर्यादित्यर्थः । अनेन हेमकारादिजातितः कङ्कणकरणादिकर्मकृतश्च विशेषोऽन्तेवासिनां दर्शितः । तेषां कर्मकृतं वृत्तिकृतञ्च विशेषं दर्शयति नारदः । स्वशिल्पमिच्छन्नाहर्तुं बान्धवानामनुज्ञया । आचार्यस्य वसेदन्ते कालं कृत्वा सुनिश्चितमिति ॥ अन्ते समीपे कृत्वा सुनिश्चितं एतावन्तं कालं मत्समीपे स्थातव्यमित्याचार्येण कृत्वा कालपरिमाणं सुनिश्चितं कृत्वेत्यर्थः ॥ आचार्यस्यापि कर्तव्यमाह स एव । आचार्यः शिक्षयेदेनं स्वगृहे दत्तभोजनम् । न चान्यत्कारयेत्कर्म पुत्रवच्चैनमाचरेदिति । अन्यच्छिल्पकर्मव्यतिरिक्तं कर्म । एवञ्चान्तेवासिना कङ्कणकरणादिकर्मफलापर्यन्तमात्रेण शुश्रूषा कार्येत्यवगन्तव्यम् । स्वगृहे दत्तभोजनमिति वृत्तिर्दर्शिता । अन्यत्कर्मकारकमाचार्यं प्रत्याह कात्यायनः । यस्तु न ग्राहयेच्छिल्पं कर्माण्यन्यानि कारयेत् । प्राप्नुयात्साहसं पूर्वं तस्माच्छिष्यो निवर्त्तत इति । शिष्यो वान्तेवासी । परिभावितकालात्प्रागेव विद्याप्राप्तावपि परिभावितकालसमापनं कार्यमित्याह नारदः । शिक्षितोऽपि कृतं कालमन्तेवासी समापयेत् । तत्र कर्म च यत्कुर्यादाचार्यस्यैव तत्फलमिति ॥ याज्ञवल्क्योऽपि । कृतशिल्पोऽपि निवसेत्कृतकालं गुरोर्गृहे । अन्तेवासी गुरुप्राप्तभोजनस्तत्फलप्रद इति । दुष्टमन्तेवासिनं प्रत्याह नारदः । शिक्षयन्तमदुष्टञ्च यस्त्वाचार्यं परित्यजेत् । बलाद्वासयितव्यः स्याद्वधबन्धौ च सोऽर्हतीति । वासयितव्यः स्थापनीयः । आचार्यपार्श्व इति शेषः । वधोऽत्र ताडनं न प्राणच्छेदः । अपराधस्याल्पत्वात् । शुश्रूषासमाप्त्यनन्तरमन्तेवासिनः कृत्यमाह स एव । गृहीतशिल्पः समये कृत्वाचार्यं प्रदक्षिणाम् । शिक्षितश्चानुमान्यैनमन्तेवासी निवर्त्तत इति ॥ भृतकानान्त्वन्तेवासिवन्न जातितो वृत्तितो वा विशेषः । किन्तु भृतितः कर्मतः कालतश्च विशेषः । तदेतदाह बृहस्पतिः । यो भुङ्क्ते परदासीन्तु स ज्ञेयो बडवाभृतः । कर्म तत्स्वामिनः कुर्याद्यथान्योऽर्थभृतो नरः । वकुधार्थकृतः प्रोक्तस्तथा भागभृतोऽपरः । हीनमध्योत्तमत्वञ्च सर्वेषामेव चोदितम् । दिनमासार्द्धषण्मासत्रिमासाब्दभृतस्तथा । कर्म कुर्यात्प्रतिज्ञातं लभते प

रिभाषितमिति। अयमर्थः। यःपरदास्युपभोगेनतत्स्वामिनःकर्म्मकरोतिसवनिताभृतः। योधनग्रहणेनकर्मकरोतिसअर्थभृतः
। यःपरिकल्पितांशग्रहणेनकर्म्मकरोतिसभागभृतः। एतावन्तङ्कालमेतत्कर्म्मकरिष्यामीतिप्रतिज्ञातङ्कर्मतावन्तङ्कालंकुर्व्वा
न्एवस्वपरिकल्पितांभृतिंलभतइति। अर्थभृतस्यबहुविधत्वमर्थाल्पत्वमहत्वाभ्यांज्ञेयम्। तेचाल्पत्वमहत्वेशक्तिभक्त्यानुसा
रेणद्रष्टव्यं। भृतकस्त्रिविधोज्ञेयउत्तमोमध्यमोऽधमः। शक्तिभक्त्यानुरूपास्यादेषांकर्माश्रयाभृतिरितिनारदस्मरणात्। भा
गभृतकस्यविभागमाहसएव। द्विप्रकारोभागभृतःकृषिगोवीजिनांस्मृतः। जातशस्यात्तथाक्षीरात्सलभेतनसंशयइति॥ हीनमध्यो
त्तमत्वलक्षणःकर्मकृतोभेदोरक्षणादिकर्म्मनिवन्धनइत्याहसएव। आयुधीतूत्तमःप्रोक्तोमध्यमस्तुकृषीवलः। भारवाहोऽध
मःप्रोक्तस्तथाचगृहकर्म्मकृदिति। कृषीवलःकर्षकः। अधिकर्म्मकृतस्तुस्वरूपमाहनारदः। सर्वेष्वधिकृतोयःस्यात्कुटुम्ब
स्यतथोपरि। सोधिकर्म्मकृतोज्ञेयःसचकौटुम्बिकःस्मृतइति॥ सर्वेषुभृतकेषुअधिकृतउपरिकृतोऽधिष्ठातृत्वेनकृतइतियाव
त्। अर्थेष्वधिकृतइतिकेचित्पठन्ति। अर्थेषुक्षेत्रहिरण्यादिषुअधिकृतःपालकत्वेननियुक्तइति। कुटुम्बस्योपरीत्यत्राधिकृ
तइत्यनुषंगः। सर्वभृतकेष्वधिष्ठातृत्वेननियुक्तोयःसोधिकर्मकृतोज्ञेयः। कुटुम्बरक्षणायव्ययकारीचित्तस्यापितोयःसतुकौटु
म्बिनइत्यर्थः। शिष्यान्तेवासिभृतकाधिकर्म्मकरेभ्योदासानाम्भेदन्दासशब्दव्युत्पत्तिप्रदर्शनमुखेनाहकात्यायनः। स्वतन्त्रस्या
त्मनोदानाद्दासत्वन्दारवद्भृगुरिति। यथाभर्त्तुःसम्भोगार्थेस्वशरीरदानाद्दारत्वम्। तथास्वतंत्रस्यात्मनःपरार्थत्वेनदानाद्दास
त्वमितिभृगुराचार्य्यैर्मन्यतइत्यर्थः। अनेनात्यंतपारार्थ्यमासाद्यशुश्रूषकादासाः। पारार्थ्यमात्रमासाद्यशुश्रूषकास्तुकर्म्मकरा
इतिभेदोप्युक्तइत्यवगन्तव्यम्। अत्यंतपारार्थ्यन्तुतेषाम्भवतियेःस्वपुरुषार्थवृत्तिनिरोधेनपरार्थत्वमात्मनमितिस्मृतिचन्द्रिकाया
म्। दासत्वम्ब्राह्मणव्यतिरिक्तेष्वेव। त्रिषुवर्णेषुविज्ञेयंदास्यंविप्रस्यनक्वचिदितितेनैवाभिधानात्। अनेनदासानांजातितोभे
दउक्तः। विप्रेतरेष्वपिदास्यमानुलोम्येनैवभवति। वर्णानामानुलोम्येनदास्यन्नप्रतिलोमतः। राजन्यवैश्यशूद्राणान्त्यजतांस्व

स्वतंत्रतामिति तेनैवोक्तत्वात्। स्वतंत्रतां यजताम्। अन्यत्र पारतन्त्र्यं भजतामित्यर्थः। न प्रातिलोम्यं तु निःस्वधर्मोपरित्यागिभ्योऽपि। अन्यत्र तु दृष्टं यन्त्रत एव नारदः। वर्णानां प्रातिलोम्येन दासत्वं न विधीयते। स्वधर्मत्यागिनोऽन्यत्र दारवद्दासता मतेति। यथा समवर्णा प्रतिहीनवर्णा सवर्णा वा भार्या भवति न पुनर्हीनवर्णस्य उत्तमवर्णा तथैव दासोऽपि भवेदित्यर्थः। एतच्च प्रव्रज्यावसितो हीनवर्णस्यापि दासो भवतीत्यभिधानं क्षत्रियवैश्यप्रव्रज्यावसितविषयं न तु ब्राह्मणप्रव्रज्यावसितविषयम्। तस्य निर्वासनाभिधानेन दासत्वाभावात्। तस्य निर्वासनञ्च दर्शितं कात्यायनेन। प्रव्रज्यावसितो यस्तु त्रयो वर्णा द्विजातयः। निर्वासं कारयेद्विप्रं दासत्वं क्षत्रविड्भृगुरिति। कारयेद्राजेति शेषः। क्षत्रश्च विट् च क्षत्रविट्। सर्वो द्वन्द्वो विभाषैकवद्भवतीति ... निर्वासनञ्च श्वपदेनाङ्कयित्वा कर्तव्यमित्याहतुर्दक्षनारदौ। पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति। श्वपदेनाङ्कयित्वा तं राजा शीघ्रं प्रवासयेदिति॥ न चैवं सति राज्ञ एव तु दासः स्यात् प्रव्रज्यावसितो नरः। न तस्य प्रतिमोक्षोऽस्ति न विशुद्धिः कथञ्चनेति नारदेन प्रव्रज्यावसितो राज्ञ एव दासो नान्यस्येत्यभिधानात् स्वधर्मत्यागिनोऽन्यत्रेति यत्तेनैवोक्तं तन्नान्यविषयमिति निरवद्यम्। यतोऽत्रेदं अधिकरणन्यायेन क्षत्रियमात्रवचनेनापि राजशब्देनाभिधानात् क्षत्रियस्य प्रजापालकस्य यद्दास्यं प्रजापालकत्वञ्च सम्भावितं तेन वैश्यस्यापि सम्भवाद्यः क्षत्रियः प्रव्रज्यावसितः स हीनवर्णस्यापि प्रजापालकस्य वैश्यस्य दासो भवतीति प्रतिपादनार्थत्वात्। केचित्तु प्रव्रज्यावसितस्य ब्राह्मणस्य दासत्वनिर्वासनयोर्विकल्पमाहुः तन्न पूर्वोक्तप्रकारेण सम्भवन्त्यां गतौ अष्टदोषदुष्टविकल्पाङ्गीकरणस्यान्याय्यत्वात्। दास्यं तु विप्रस्य न क्वचिदिति निषेधाच्च। दारवद्दासता मतेति वचनाद्ब्राह्मणस्य सवर्णं प्रति दासत्वप्राप्तं तन्निषेधार्थमाह कात्यायनः। सवर्णोऽपि हि विप्रं तु दासत्वं नैव कारयेदिति। यदि ब्राह्मणः स्वेच्छया दास्यं भजते तदा स्वाशुभं कर्म न कुर्यादित्याह स एव। शीलाध्ययनसम्पन्ने तद्दूनं कर्म कामतः। तत्रापि नाशुभं कर्म प्रकुर्वीत द्विजोत्तम इति। यस्मात् स्वेपकारः कर्तव्य इति विधिः तस्माद्धूनं कर्म मध्यमोत्तमव्यतिरिक्तमपि कर्म कामतो वेतनमन्तरेण स्वेच्छया परोपकारार्थं कुर्यादित्यर्थः। पूर्वार्द्ध

ध्य । तत्रापितेष्वपिहीनकर्म्मसुपदप्रभङ्कर्म्मगृहद्वारशोधनादिकन्नत्रकुर्य्यादित्युत्तरार्द्धार्थः । क्षत्रियवैश्यविषयेस्वामि
नःकर्त्तव्यमाहमनुः । क्षत्रियञ्चैववैश्यञ्चब्राह्मणोवृत्तिकर्षितौ । बिभृयादानृशंस्येनस्वामीकर्म्माणिकारयन्निति । आनृशंस्ये
नक्रौर्य्येण । अयमर्थः । वृत्तिकर्षितंक्षत्रियंवैश्यञ्चदासीभूतमक्रौर्य्येणस्वानिकर्म्माणिकारयन्स्वामीपोषयेदिति । अत्र
स्वामीत्यनेननसम्बन्धिजनकर्माणिकारयेदित्याह । कर्म्माणीतिसामान्याभिधानेनजघन्यकर्म्माण्येवकारयितव्यानीतिनि
यमोनास्तीतिसूचयति । वृत्तिकर्षितावित्यनेनगत्यन्तराभावेएवक्षत्रियवैश्ययोर्दासत्वाङ्गीकारःकार्य्योनतुगत्यन्तरसम्भवइति
दर्शयति । बलाद्दासीकरणेदण्डमाहमनुः । दास्यन्तुकारयंल्लोभाद्ब्राह्मणःसंस्कृतान्द्विजान् । अनिच्छतःप्राभवत्याद्रा
ज्ञादण्ड्यःशतानिषडिति । प्रभवतोभावःप्राभवत्वन्तस्मात्प्रभुत्वादित्यर्थः । साधारणादिभ्यःस्वार्थेष्यञ्वक्तव्यइतिवार्त्तिका
दस्त्व । द्विजातिपदग्रहणंशूद्रविषयइतिदर्शयति । अतएवाह । शूद्रन्तुकारयेद्दास्यंक्रीतमक्रीतमेववा । दास्यायैव
हिसृष्टोसौब्राह्मणस्यस्वयम्भुवेति । सचदासःपञ्चदशप्रकारइत्याहनारदः । गृहजातस्तथाक्रीतोलब्धोदायादुपागतः ।
अनाकालभृतस्तद्वदाहितःस्वामिनाचयः ॥ मोक्षितोमहतश्चर्णात्युद्धप्राप्तःपणेजितः । तवाहमित्युपगतःप्रव्रज्यावसितःकृ
तः । भक्तदासश्चविज्ञेयस्तथैववडवाहृतः । विक्रेताचात्मनःशास्त्रेदासाःपञ्चदशस्मृताइति । गृहजातःस्वगृहेदास्याञ्जातः ।
क्रीतोमूल्येनस्वाम्यन्तरात्प्राप्तः । लब्धःततएवप्रतिग्रहादिना । दायादुपागतःरिक्थग्राहित्वेनलब्धः । अनाकालभृतःदुर्भिक्षेयोम
रणाद्दासत्वायरक्षितः । आहितःस्वामिनाधमर्णदानर्थाधिनाग्नीतः । ऋणमोचनेनदासत्वमभ्युपगतोऋणदासः । युद्धप्रा
प्तःसमरेविजित्यगृहीतः । पणेजितःदासत्वपणकेद्यूतादौजितः । तवाहमित्युपगतःतवाहन्दासोस्मीतिस्वयमेवोपगतः ।
प्रव्रज्यावसितःप्रव्रज्यातश्च्युतः । कृतःएतावत्कालन्त्वन्तवदासोभवामीत्यभ्युपगतः । भक्तदासःसर्वकालम्भक्तार्थमेवदासत्वमभ्यु
पगम्यप्रविष्टः । भक्षितंयावत्तेमूल्यद्वारेणदद्यामितावद्दासइत्यभ्युपगतइतिस्मृतिचन्द्रिकायां । वडवाहृतःवडवागृहदा

कारप्रतिपादनमात्रपरत्वाद्वचनस्य । अन्यथा यावद्धनलाभमभर्त्तृत्वेष्टिविलम्बोऽपि प्रसज्येत । स चानेकस्मृतिनिषिद्धः । अ
दृष्टकल्पनापत्तिश्च । पत्न्यैवेत्येवकारेणापुत्रस्यान्त्यकर्म्मण्यपुत्रापुत्रवत्पत्नीत्यादिवचनाद्भ्रात्रादिसत्त्वेऽपि सैवाधिकारिणी
निर्दर्शितं । अयमेवार्थः प्रपञ्चितः प्रजापतिना । जङ्गमं स्थावरं हेमं कुप्यं धान्यं रसाम्बरं । आदाय दापयेच्छ्राद्धं मासषाण्मा
सिकादिकम् । पितृव्यगुरुदौहित्रान्भर्त्तुः स्वस्रीयमातुलान् ॥ पूजयेत्कव्यपूर्त्ताभ्यां वृद्धानाथातिथीन् स्त्रियः । कुप्यन्त्रपुसी
सादि । कव्यम्पित्रर्थं सङ्कल्पितमन्नादि । पूर्त्तं खातादि कर्म्माङ्गदक्षिणादि । एतदुक्तम्भवति । स्थावरेणापि सहितं सर्वं भ
र्त्तृधनमधिगम्य धनसाध्यं स्वाधिकारिकम्पत्युरात्मनश्च श्रेयःसाधनकर्म्म पतिपक्षीयपुरस्कारेण पत्न्या कार्य्यमिति । एवं वर्त्तमा
नायां ये पीडाकारिणस्तेषाञ्चोरवद्दण्डमाह स एव । सपिण्डा वान्धवा ये तु तस्याः स्युः परिपन्थिनः । हिंस्युर्द्धनानि तान्रा
जा चौरदण्डेन शासयेत् ॥ स्मृतिचन्द्रिकायां वार्हस्पत्यवचनेन पत्न्याः स्थावरग्रहणनिषेधकं । यद्विभक्ते धनं किञ्चिदाध्यादि विविधं
स्मृतम् । तज्जाया स्थावरं मुक्त्वा लभते मृतभर्त्तृकेति वचनं लिखितं । जङ्गमं स्थावरमित्यादिप्रजापतिवचनविरोधपरिहाराय
वृत्तविहीनपत्नीपरत्वमविभक्तपत्न्यंशविषयत्वम्वान्योक्तं । वृत्तस्थायिकृते पत्न्यंशेन स्त्री स्थावरमर्हतीति तच्छेषविरोधेनापास्य दुहि
तृरहितपत्नीविषयत्वेन व्यवस्थापितञ्च । तत्र मदनरत्नकारेण मिताक्षराकल्पतरुहलायुधादिसर्वग्रन्थान्तरेष्वलिखनान्नि
र्म्मूलत्वमस्य । जङ्गमं स्थावरमिति प्रजापत्यस्य च सर्वत्र लिखनात्समूलत्वमिति दूषणमुक्त्वा तदुक्तव्यवस्थायाश्च स्वोत्प्रेक्षामात्रक
ल्पितत्वेनायुक्तत्वमभिधाय समूलत्वेऽपि स्थावरादिसमग्रधनग्रहणम्ब्राह्मादिविवाहोढाविषयन्तद्वचनेषु पत्नीशब्दप्रयोगात् ।
स्थावरग्रहणप्रतिषेधकवृहस्पतिवचनन्तु जायाशब्दमात्रप्रयोगादासुरादिविवाहोढाविषयमिति स्वयं व्यवस्था कृता । आ
सुरादिविवाहोढायाः पत्नीशब्देनाग्रहणाज्जायादिशब्दोपेतवचनानामपि तदेकमूलकतया तत्परत्वात्स्मृतिचन्द्रिकायामेव नि
रस्ता । यत्तु तदुक्तव्यवस्थायामौत्प्रेक्षिकत्वमुक्तन्तदपि न । दुहितृसत्वे तत्सन्तानद्वारेण स्थावरस्योपभोगधनस्वाम्युपकारयोः

सम्भवाद्दुहितृमपियाह्यन्तद्दुहितायास्तु तदभावान्न तद्ग्रहणमिति तत्रापि वीजसम्भवात्। अत एव पितुरपि स्थावरे स्वार्जितेपि पुत्रानुमतिमन्तरेणानधिकारः प्रागुक्तः॥ यत्तु गृहीतधनायाः पत्न्यास्तद्धनेन जीवनमात्रं न्दानाधीकरणविक्रयेषु तु नाधिकार इति मृते भर्त्तरि भर्त्त्रंशं लभेत कुलपालिका। यावज्जीवं न हि स्वाम्यं दानाधमनविक्रये इति कात्यायनवचनात्प्रतीयते। तदपि दृष्टार्थं नटनर्त्तकादिदानास्वातन्त्र्यपरम्। अदृष्टार्थदाने तदुपयोगिनोराधीकारणविक्रययोश्चातेनैवाधिकाराभिधानात्। व्रतोपवासनिरता ब्रह्मचर्य्ये व्यवस्थिता। दमदानरता नित्यमपुत्रापि दिवं व्रजेदिति॥ दिवं व्रजेदित्यनेन काम्येपि दानादौ तस्या अधिकारः प्रतीयते किमुत नित्ये नैमित्तिके च। जङ्गमं स्थावरं हेमेत्यादिपूर्वोदाहृतप्रजापतिवचनाच्च। तत्रापि पूर्त्तं यद्ग्रहणात्काम्येष्वप्यधिकार आयातीति स्मृतिचन्द्रिकाकारादयः। यच्चापरमपि कात्यायनवचनमेव। अपुत्रा शयनं भर्त्तुः पालयन्ती गुरौ स्थिता। भुञ्जीतामरणात्क्षान्ता दायादा ऊर्द्ध्वमाप्नुयुरिति। तत्र स्मृतिचन्द्रिकाकार आह। क्षान्ता। दायादकारितधनविनियोगप्रतिवन्धं सहमाना सत्यामरणाद्भुञ्जीतेत्यर्थः। इदञ्चारक्षणभरणाद्यसमर्थेषु कार्य्यान्तरव्ययेषु वा श्वश्रुरादिषु पत्न्या यत्स्वयमेव स्वजीवनार्थमुपात्तमविभक्तन्तद्विषयम्। विभक्तद्रव्यविषयत्वे मन्वादिपरिनिष्ठितार्थवाधापत्तेरिति। पौरस्त्यास्तु गुरौ श्वश्रुरादिसमीपे स्थिता भर्त्तृधनम्भुञ्जीतैव। ननु स्त्रीधनवद्यथेच्छन्दानाधानविक्रयादि कुर्वीत तस्या ऊर्द्ध्वं दायादा दुहित्रादयस्तद्धनाधिकारिणो गृह्णीयुर्न्न तु ज्ञातयः। तेषां दुहित्रादिभ्यो जघन्यत्वात् तद्बाधकत्वानुपपत्तेः। पत्नी हि तेषां वाधिका। तदधिकारप्रागभावप्रध्वंसयोरविशेषाद्बाधकाभावस्य तद्बाधानुपपत्तेः। नापि स्त्रीधनाधिकारिणो गृह्णीयुः। कात्यायनेनैव स्त्रीधनाधिकारिणां वचनान्तरैरुक्तत्वात्तेन रुक्तत्वापत्तेः। अतः पत्नी दुहितरश्चेत्यादिना ये पूर्वपूर्वस्याभावे परभूता अपुत्रासंसृष्टिविभक्तमृतधनाधिकारिणो निर्द्दिष्टास्ते यथा पत्न्यधिकारप्रागभावं गृह्णीयुस्तथा पत्न्या जाताधिकारायाः प्रध्वंसेपि भोगावशिष्टं गृह्णीयुः। तदानीं दुहित्रादीनामेवान्यापेक्षया मृतोपकारकत्वात्। दानधर्म्मेषु महाभारतवचनमप्येतदुपोद्बलकम्। स्त्री

णांस्त्वपतिदायस्तु उपभोगफलः स्मृतः । नापहारं स्त्रियः कुर्य्युः पतिवित्तात्कथञ्चनेति । उपभोगोपि न सूक्ष्मवस्त्रादिना । कि
न्तु पत्युरुपकाराय देहधारणमात्रोपयोग्युपभोगानुज्ञानम् । एवञ्च वृहस्पतिनापि पितृव्यगुरुदौहित्रानित्यादिना पितृव्यपदेन
भर्तृसपिण्डोपलक्षणाद्दौहित्रपदेन तद्दुहितृसन्तानोपलक्षणान्मातुलस्वस्रीयपदाभ्यां तन्मातृकुलोपलक्षणात्तेभ्य एवार्थानु
रूपम्भर्तुः श्राद्धाद्यौर्ध्वदैहिकोपकारकं दद्यात् । न तु स्वपितृकुलसम्बन्धिभ्यस्तदनुमत्या तु तेभ्योपि । तथा च नारदः । मृते भर्त
र्य्यपुत्रायाः पतिपक्षः प्रभुः स्त्रियाः । विनियोगेषु रक्षासु भरणेषु च ईश्वरः । परिक्षीणे पतिकुले निर्म्मनुष्ये निराश्रये ॥ तत्सपि
ण्डेषु चासत्सु पितृपक्षः प्रभुः स्त्रिया इति । संमुखमेव वचनार्थमादाय नास्त्येव स्त्रिया भर्तृरिक्थे दानविक्रयाद्यधिकार इत्याहुः ।
तच्चेदम्वाच्यं । किन्नास्य तया कृतेपि दानादौ तत्स्वरूपानिष्पत्तिरेव । न तावदेवं युक्तं । मन्वादिवचनैः सकलभर्तृधनग्रहणेन स्वा
स्वत्वे सति तस्याः स्वत्वसत्त्वे दानादिस्वरूपानिष्पत्तेर्बाधितत्वात् । अत एव जीमूतवाहनेनैव स्थावरस्य समस्तस्य । विभक्तावाऽविभ
क्ता वा स्थावरं द्विपदञ्चैवेत्यादीनि स्थावरविषयाणि दानादिनिषेधवचनान्युपन्यस्याधर्मभागिताज्ञापनार्थमेतानि दुर्वृत्तं पुरु
षं प्रतिकुटुम्बदुःखदानार्थमेव दानविक्रयादिप्रवृत्तं प्रतिषेधकानि न तु दानादिस्वरूपानिष्पत्तिप्रतिपादकानि । यथेष्टविनियो
गार्हत्वलक्षणस्वत्वस्य द्रव्यान्तर इव स्थावरेप्यविशेषाद्वचनशतेनापि वस्तुनोऽन्यथाकरणाशक्यात्तत्प्रतिपादनानुपपत्तेरिति निरू
पितम् । तदुक्तरीत्यात्रापि दुर्वृत्तया दायाददुःखदानार्थमेव भर्तृरिक्थदानादिप्रवृत्तायास्तु प्रतिषेधातिक्रमादधर्मः । धर्मा
र्थन्दानप्रवृत्तायाः स्वजीवनाद्यर्थं विक्रयाधाने कुर्वन्त्यास्तु नास्त्येवाधर्मोपि । न च भुञ्जीतैवेति नियमाद्दायादा ऊर्ध्वमाप्नुयुरि
त्यभिधानाच्च दानाद्यनधिकार एव तस्याश्च विभक्तधन इव तत्रेति वाच्यम् । साधारणस्वत्वाश्रयाविभक्तधनेनासाधारणस्वत्वाश्र
यस्यास्य वैधर्म्यात् । न च स्वभोगस्य प्राप्तत्वेनाविधेयत्वाद्दानादिपरिसङ्ख्यार्थ एवं विधिस्तथा चानधिकारस्त्वागत एवेति वाच्य
म् । वस्तुन्यथाकरणाशक्तेर्नियमस्य वृथा दानादिना द्रव्यनाशनिवृत्त्यर्थतयैवोपपत्तेरवश्यवाच्यत्वात् । अन्यथाऽनधिकारेद

मदानरता पूजयेत्कव्यपूर्त्ताभ्यामित्यनेन दानविधिना विरोधोऽपरिहार्य्यः। यच्च दायादाः पत्न्यनन्तराधिकारिणः पत्नीदुहित
रश्चेत्यत्र निर्द्दिष्टास्ते गृह्णीयुः प्रागभावप्रध्वंसयोः प्रतिबन्धकपत्न्यभावत्वस्याविशेषात्तदधिकारोद्भवादित्युक्तन्तदतिस्थवीयः।
दायादपदेन स्त्रीधनाधिकारिग्रहणे यथा वचनान्तरोक्तत्वात्पौनरुक्त्यं तथा तेषामपि कात्यायनेन वचनान्तरोक्तत्वात्पौनरुक्त्याविशे
षात्। वस्तुतस्तु जातस्वत्वे स्वामिनि मृते तत्प्रत्यासन्नानामेव तद्धनग्रहणमुचितम्। पत्न्यादिशब्दानां सम्बन्धिशब्दत्वेन द्रव्यस्वामित्वे
पत्न्याद्युपजाते पूर्वस्वामिदुहित्रादीनाञ्च प्रसङ्गः। तेन यद्यपि पूर्वाभावः प्रागभावः प्रध्वंसश्चात्यन्ताभावश्च प्रतिबन्धकसंसर्गाभा
व उभयाभावश्च तुल्यस्तथापि यो द्रव्यस्वामी तस्मिन्मृते तत्सम्बन्धिपत्न्यादिकमपुत्रस्य तस्य धनं लभेतेत्येव वाक्यार्थः। अन्यथा दुहि
त्रादिभिरपुत्रपितृधने लब्धे तन्मरणे तत्सन्तत्यतिलङ्घनेन तद्धनं पूर्वस्वामिनः पितुर्यैः पित्रादयस्त एव लभेरन्निति महत्यव्यवस्था प्रस
ज्येत। तस्माद्भर्त्तृरिक्थम्पत्न्या लब्धन्तस्यां मृतायां तद्भोगावशिष्टमातुर्दुहितरश्चेत्यादिवचनाद्दुहित्रादिग्राह्यत्वेन प्रसक्तं दायादा
ऊर्ध्वमाप्नुयुरित्यनेनापोद्यते। अयञ्च वचनार्थः। दायादा इत्यत्र कस्येत्यपेक्षायां शयनान्वितम्भर्त्तुरित्येवोपस्थितत्वादनुषज्यते
। तथा चैवं वचनव्यक्तिः तस्या ऊर्ध्वम्भर्त्तुर्दायादाश्चाविभक्ततद्धनाधिकारिणो विभक्तभ्रातृधनमपि तत्पत्नीभोग्यावशिष्टं गृह्णीयुर्न
पत्नीरिक्थहराः दुहित्रादय इति एवञ्च पूर्वार्थत्वाच्चतुर्थचरणस्यार्थवत्त्वं भवति अन्यमते वचनान्तरोक्तार्थानुवादमात्रमनर्थकं स्या
त्तस्माददृष्टार्थे दाने दृष्टादृष्टावश्यककार्यार्थमाधौ विक्रये चास्त्वेव पत्न्याः सकलभर्त्तृधनविषयोधिकारः नियमस्तु नटनर्त्तका
दिदानानावश्यकाधिविक्रयनिवृत्त्यर्थ इति सिद्धम्। अत एव क्षान्तेत्युक्तम्। द्रव्यप्राप्तुं विना वृथाद्रव्यव्ययकारिणी न भवेदि
त्यर्थः। दानधर्मस्थं महाभारतवचनन्तु सुतरामस्मदुक्तमेवार्थमुपोद्बलयति। तथाहि स्त्रीणां स्वपतिदायः स्वभर्त्तृरिक्थमु
पभोगफलः। उपभोगो धर्म्मप्रत्यासन्नो भोगो न त्वसद्भोगः फलम्प्रयोजनं यस्य तादृशः स्मृत उक्तो मन्वादिभिः। उपराद्धं
नदेवव्ययन्ति। स्त्रियः पतिवित्तादपहारं वृथाव्ययं न कुर्युः। कथञ्चनेत्यनेनापहारस्य सर्वथैवाश्रेयस्करतामाह। अपहारो

हि चौर्य्यम्। नटनर्त्तकादौ वृथादानम्। सूक्ष्मवस्त्रादिपरिधित्सामृष्टभक्ष्यादिबुभुक्षयैवमाद्यपि सर्व्यं तायाश्चतौ चिकीर्षा र्य्यं तुल्यमित्यपहारशब्दगोचरः। धर्म्मार्थं यद्दानादिकन्तु न तथेति नापहारशब्देन बोधयितुं शक्यते। तस्मात्सर्वं सुस्थम्। पत्न्या अपुत्रविभक्तासंसृष्टिपतिस्वापतेयग्रहणे प्रथमाधिकारप्रतिपादकान्यपराण्यपि भूयांसि स्मृतिवचनानि तत्र बृहस्पतिः। आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः। शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समा॥ यस्य नोपरता भार्य्या देहार्द्धं तस्य जीवति। जीवत्यर्द्धशरीरेऽर्थं कथमन्यः समाप्नुयात्॥ सकुल्यैर्विद्यमानैस्तु पितृमातृसनाभिभिः। अपुत्रस्य प्रमीतस्य पत्नी तद्भागहारिणीति। योगीश्वरोपि पूर्वाभावे पराधिकारं वदन्सर्वप्राथम्येन पत्न्या एवाधिकारमभिधत्ते। विष्णुरपि। अपुत्रस्य धनं पत्न्यभिगामि तदभावे दुहितृगामि तदभावे पितृगामि तदभावे मातृगामि तदभावे भ्रातृगामि तदभावे भ्रातृपुत्रगामि तदभावे बंधुगामि तदभावे सकुल्यगामि तदभावे शिष्यगामि तदभावे सहाध्यायिगामि तदभावे ब्राह्मणधनवर्ज्जं राजगामीति। बंधुरत्र पिण्डः सकुल्यः सगोत्रः। बंधुपदेन वक्ष्यमाणपितृबंध्वादिग्रहणे योगीश्वरोक्तक्रमविरोधापत्तेः। कात्यायनोपि। पत्नी पत्युर्द्धनहरी या स्यादव्यभिचारिणी। तदभावे तु दुहिता यद्यनूढा भवेत्तदा। स्मृत्यन्तरमपि। अपुत्रस्याथ कुलजा पत्नी दुहितरोपि वा। तदभावे पिता माता भ्राता पुत्राश्च कीर्त्तिताः इति॥ एतैर्वचनैः सर्वतः पूर्वं पत्नी पतिधनभागिनीति प्रतिपादितम्। एतद्विरुद्धान्यपि वचनानि लक्ष्यन्ते। तथा च नारदः। भ्रातॄणामप्रजाः प्रेयात्कश्चिच्चेत्प्रव्रजेत वा। विभजेरन्धनं तस्य शेषास्ते स्त्रीधनं विना॥ भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात्। रक्षन्ति शय्यां भर्त्तुश्चेदाच्छिंद्युरितरासु चेति। पत्नीसद्भावेपि भ्रातॄणां धनग्रहणं भरणमात्रं तत्पत्नीनामाह। मनुरपि। पिता हरेदपुत्रस्य रिक्थं भ्रातर एव चेति। पितृभ्रात्रोर्विकल्पेनापुत्रधनग्रहणाधिकारं वदति न तु पत्न्याः॥ अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्। मातर्य्यपि च वृत्तायां पितुर्माता हरेद्धनमिति च स्मृतिर्मातृपितामह्योरपुत्रधनाधिकारमभिदधाति। शङ्खलिखितपैठीनसियमोपि। अपुत्रस्य स्वर्यातस्य भ्रातृगामि द्रव्यं तदभा

चेपितरौहरेयातांज्येष्ठावापत्नीतिभ्रातुःपित्रोश्चाभावेपत्न्यधिकारंसूचयन्ति । देवलोपि । ततोदायमपुत्रस्य विभजेयुः सहोद
राः । तुल्यादुहितरोवापिध्रियमाणःपितापिवा ॥ सवर्णाभ्रातरोमाताभार्य्याचेतियथाक्रममिति । सर्वपूर्वाभावेनयोगीश्वरेणाभि
हितायाःपत्न्याभ्रात्राद्यभावेऽधिकारमाचष्टेभ्रातृशब्देनात्र भिन्नोदराः । सहोदराणांपृथगुपादानात् । कात्यायनोपि । विभक्ते
संस्थितेद्रव्यंपुत्राभावेपिताहरेत् । भ्राताबाजननीवाथमाताबातत्पितुःक्रमादिति । पित्रादिषुयाहकेषुपत्न्यानिर्देशमपिनकरो
ति । एतेषामन्योन्यविरुद्धानांवचनानांधारेश्वरइत्थंव्यवस्थामाह । विभक्तासंसृष्टभ्रातुरपुत्रस्यपत्नीयदिनियोगमङ्गी
कुरुतेतदैवपतिधनंलभते । अनियोगार्थिन्यास्तुतस्यामविभक्तसंसृष्टपत्नीवद्दूरएवमात्रमेवनियोगद्वारैवापुत्रपत्न्याःपति
स्वापतेयस्वामित्वन्नचबीजमनेकस्मृतिष्वपत्यद्वारैवतस्याधनसम्बन्धबोधनम् । तथाचगौतमः । पिण्डगोत्रर्षिसम्बन्धा
रिक्थम्भजेरन्स्त्रीवानपत्यस्यबीजंवालिप्सेतेति । अनपत्यस्यरिक्थम्पिण्डगोत्रर्षिसम्बन्धाभजेरन्तस्यस्त्रीवारिक्थम्भजेत् । य
दिबीजंचलिप्सेत ॥ वाशब्दोयदिशब्दार्थः अन्यथारिक्थग्रहणबीजलिप्सयोरतुल्यत्वेनविकल्पार्थकत्वानुपपत्तेः । तथामनु
रपि । धनंयोबिभृयाद्भ्रातुर्मृतस्यस्त्रियमेववा । सोपत्यंभ्रातुरुत्पाद्यदद्यात्तस्यैवतद्धनमिति । विभक्तधनसम्बन्धमप्यपत्यद्वा
रेणैवपत्न्यादर्शयति । तथाविभागाभावेपि । कनीयान्ज्येष्ठभार्य्यायाम्पुत्रमुत्पादयेद्यदि । समस्तत्रविभागःस्यादितिधर्म्मो
व्यवस्थितइतिवदन्नपत्यद्वाराधनसम्बन्धोस्त्रीणामाह । तेनान्वयव्यतिरेकाभ्यामपत्यद्वारकएवपत्न्याधनसम्बन्धोनान्यथेतिसि
द्धम् । वशिष्ठोपि । रिक्थलोभान्नास्तिनियोगइतिरिक्थलोभप्रयुक्तंनियोगंप्रतिषेधन्नहीत्तनियोगायाएवधनसम्बन्धःनेत
रस्याइतिस्पष्टमेवाचष्टे । तथाचभ्रातृणामप्रजाइत्यादीनिनारदादिवचनान्यनियोगार्थिनीविषयाणिपर्य्यवस्यन्ति । अ
पुत्रायोषितस्त्वेषाम्भर्त्तव्याःसाधुवृत्तयः । निर्वास्याव्यभिचारिण्यःप्रतिकूलास्तथैवचेतियोगीश्वरेणापुत्राणामन्यादियोषितांभ
रणमाभाषमाणःपुत्रस्यैवधनसम्बन्धप्राधान्यात्तत्कृतएवतत्स्त्रीणांधनसम्बन्धइतिसूचयन्न्यायसाम्यात्सर्वत्रापत्यमूलकमेवस्त्री

॥वी०मि०॥
॥ व्य० ॥
॥ १८६ ॥

यां रिक्थग्रहणं ज्ञापयति। यज्ञार्थं द्रव्यमुत्पन्नं तत्रानधिकृतास्तु ये। अरिक्थभाजस्ते सर्वे ग्रासाच्छादनभाजना इति स्मृतिः। पुरुषाणामपि पुत्रादीनां यज्ञानधिकृतानां रिक्थानधिकारं वदन्तो दण्डापूपन्यायेन सुतरामभर्तृकाणां तदनधिकारिणीनां धनसम्बन्धं निरस्यति। तथा स्मृत्यन्तरमपि। यज्ञार्थं विहितं वित्तं तस्मात्तद्विनियोजयेत्। स्थानेषु धर्मयुक्तेषु न स्त्रीमूर्खविधर्मिष्विति। स्त्र्यादिषु धनविनियोगमपि प्रतिषेधत्साक्षात्तस्या एव कृत्स्नधनग्रहणं सुदूरं दूषयतीति। तदिदं विज्ञानेश्वरादयो नानुमन्यन्ते पत्नी दुहितर इत्यादिषु साक्षान्नियोगानुपादानात्। प्रस्तावाभावाच्च। किञ्च नियोग एव पत्न्या रिक्थसम्बन्धप्रयोजकस्तदुत्पन्नमपत्यं वा। प्रथमेनुत्पादितपुत्राया अपि स्त्रीकृतनियोगाया धनाधिकारः स्यान्नियोगोत्पन्नपुत्रस्य च न स्यान्नियोगमात्रेणैव भर्तृधनस्वाम्यात्। द्वितीये वचनान्तरैरेवापत्यस्य धनसम्बन्धसिद्धेः पत्नीवचनमनर्थकम्। अथ स्त्रीणां पतिमात्रद्वारको धनसम्बन्धो न प्रकारान्तरेण जीवति पत्यौ तद्द्वारको मृते त्वपत्यद्वारक इति बोधनार्थं नियोगार्थिनी पत्नी परम्पत्नीवचनमिति मतम्। तदसत्। अध्यग्न्यध्यावाहनिकमित्यादिवक्ष्यमाणवचनैरन्यथापि तासां धनसम्बन्धबोधनात्। भर्तृधने द्वैधेव सम्बन्धो नियम्यत इति चेत्। तर्हि जीवति पत्यौ तद्धनसम्बन्धस्य पाणिग्रहणाद्धि सहत्वमित्यादि गौतमवचनेनैव सिद्धेर्मृते तु तस्मिन्नियोगनिमित्ततद्धनसम्बन्ध उच्यमानः क्षेत्रजपुत्रस्यैवोक्तो भवति सोपि प्रागुक्त इत्यपुत्रप्रकरणे पत्नीग्रहणमनारभ्यमेव। यच्च गौतमवचनं बीजं वा लिप्सेतेति यदि बीजं लिप्सेत त्वर्थकतया नियोगद्वारक एव धनसम्बन्धोऽपुत्रपत्न्या इत्यत्र प्रमाणमित्युक्तं तदप्ययुक्तम्। वाशब्दस्य पक्षान्तरवाचित्वेन यद्यर्थाप्रतीतेः। धनग्रहणबीजलिप्सयोरतुल्यार्थतया विकल्पार्थकत्वासम्भवे निपातानामनेकार्थत्वात्प्रकृतान्वयोपयोगी यद्यर्थ एव कल्प्यत इति चेत्। न बीजस्यालिप्सेत सध्यं तावाभवेदिति प्रासङ्गिकधर्मान्तरोपदेशरूपतया विकल्पार्थकताया एव सम्भवात्। तथा च गौतमवचनस्यापि नियोगनिरपेक्षमेव भर्तृरिक्थग्रहणमुक्तं भवति। किञ्च विधवानियोगस्य निषिद्धत्वात् पुत्राश्रयं न भर्तुः पावयन्तीत्यादिमन्वादिवचनैः संयताया एव धनाधिकारप्रतिपादनान्निवेशस्याव्यभिचारिण्य इत्यादिनाभ

रणमात्रस्याप्यसंयतानामभावात् स्त्रीभर्तृरिक्थग्रहणन्तु रूपान्तमेव । यथाभिहितमनयोर्विभृयाद्भ्रातुः कनीयान् ज्येष्ठभार्य्या
यां रिक्थलोभान्नास्ति नियोग इति मन्वादिवचनैर्विभक्ताविभक्तधनसम्बन्धोऽन्वयव्यतिरेकाभ्यामपत्यद्वारक एव पत्न्या आ यावज्जीवि
। तदपि वाचनम् । अविभक्ते संसृष्टिनि वा भर्त्तरि प्रेते पुत्रद्वारक एव तस्यास्तद्धनसम्बन्ध इति । धनलोभेन नियोगो नाभ्युपेय इति
तन्नाव्यर्थ्यात् । अत एव संसृष्टानान्तु यो भागः तत्स्थानेषु तेषु धेरियभिधायतज्ज्ञोक्ताननपत्यानाम्भरणमात्रं नारदेन प्रति
पादितम् । न चैवं भ्रातृणामपुत्राः प्रेयादित्यस्यापि संसृष्टाविभक्तविषयत्वे संसृष्टं । ऽसंसृष्टानान्तु भाग इत्यनेन पौनरुक्त्यं
स्यादिति वाच्यम् । तदंशविवरणपूर्वकं स्त्रीधनाविभाज्यत्वद्वारणयोरपूर्वयोर्विधानात् । यत्तु पुत्रा योषितस्तेषामिति योगीश्व
रवचनन्तु क्लीबादीनां पुत्राणामेवामिति सर्वनाम्नाप समर्थानन्तरीविषयमिति विभागानधिकारिनिरूपणप्रसङ्गाद्वैवाच्य
ते । यदपि हिरण्यनिधनस्य यज्ञार्थत्वात्तदनधिकारिण्या प्रमीतपतिकया तद्ग्रहणमनर्हमित्युक्तन्तदप्ययुक्तं यज्ञग्रहणस्य दाना
द्युपलक्षकत्वात्तत्र च तस्या अप्यधिकारात् । यथाश्रुते यज्ञभिन्नदानहोमादिष्वप्यविनियोगप्रसङ्गः । वस्तुतस्तु केवलधर्मार्थ
त्वमपि धनस्य नास्ति । धर्म्ममर्थञ्च कामञ्च यथाशक्ति न हापयेत् । तथा पूर्वाह्णमध्यन्दिनापराह्णानफलान् कुर्य्याद्धर्मार्थकामेभ्य
इत्यादिभिरर्थकामयोरपि तत्साध्ययोरावश्यकत्वात् । यज्ञार्थत्वञ्च द्रव्यस्य यदि साक्षाद्धिरण्यधारणस्य काचनव्यभिचारिहिरण्यव
न्धेन कामार्थत्वे वस्त्रादिति पुरुषार्थत्वं यत्तस्य स्यापि तन्नैतद्विरुध्येत । न स्त्री स्वातन्त्र्यमर्हतीत्यादिवचनात्पारतन्त्र्यमात्रमस्तु
स्त्रियाः न तु धनग्रहणे कोऽपि विरोधः ॥ यज्ञार्थन्द्रव्यमुत्पन्नमिति तु धर्म्मविनियोगप्रशंसार्थम् । अत एव स्थानेषु धर्म्मयुक्तेषु न
स्त्रीमूर्खविधर्म्मिष्विनिकाचशेषः । मिताक्षराकृतस्तु यज्ञार्थं लब्धमददद्भासः काकोऽपि वा भवेदिति दोषश्रवणस्य पुत्रादिष्वप्यवि
शेषेणापि श्रवणाद्यज्ञार्थमर्जितन्तत्पुत्रादिभिरपि तत्रैव विनियोज्यं नान्यत्रेत्येवंपरमेतदित्याहुः ॥ श्रीकरादयस्तु । भार्य्याभरण
मात्रपर्य्याप्तं यदि भर्तृधनन्तदा सर्वमेव गृह्णाति । अतिरिक्तञ्चेद्भ्रात्रादय इति विषयव्यवस्थामाहुः । कात्स्न्र्यमंशं लभेत चन्ये तद

ऽपितत्परमेव । वर्त्तनदानस्यावश्यकत्वात् । तेन सर्ववाक्यानामविरोध इति यत्तत्रोपपत्तिं कल्पयन्ति । वार्त्तमेतत् । सकृच्छ्रुतध
नपदस्य पत्न्यपेक्षञ्जीवनपर्य्याप्तधनपरत्वं मात्राद्यपेक्षञ्च धनमात्रपरत्वमिति तात्पर्य्यभेदस्यासति सारूप्यसम्भवेऽन्याय्यत्वात्
। मनुवचनेऽहत्वत्तपदवैयर्थ्यापाताच्च । सत्स्वपौरसेषु पुत्रेषु तत्समांशा यदृच्छया जीवदजीवद्विभागयोस्तु कार्यं यदि कुर्य्यात्समा
नंशान्पत्न्यः कार्याः समांशिकाः । पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेदित्याभ्यां वचनाभ्याम् । असत्सु पुत्रेषु पत्नी भरणमा
त्रं लभत इति महान्व्यामोहः । तत्रापि जीवनपर्य्याप्तमेवांशशब्देन विवक्षितमिति चेन्न ॥ अंशशब्दसमशब्दयोरानर्थक्यप्र
सङ्गात् । दत्ते त्वर्द्धं प्रकल्पयेदित्यत्रापि जीवनोपयुक्तपरत्वावश्यम्भावे सर्वथार्द्धपदार्थत्यागापत्तेश्च । अल्पधने पुत्रसमांशं
बहुधने जीवनोपयुक्तमात्रं विवक्षितमिति तु विधिवैषम्यापत्तेरप्ययुक्तम् । तथाहि । तावेव समांशशब्दौ वाक्यान्तरमपेक्ष्य बहुधने
जीवनमात्रपर्य्याप्तधनपरौ कदाचित् । अल्पधने तु यथाश्रुतार्थकाविति एकस्मिन्विधौ वाक्यार्थभेदेन वाक्यभेदापत्तेरयुक्तम् ॥ युग
पच्छक्तिलक्षणावृत्तिद्वयापाताच्च । यथा चातुर्मास्यप्रकरणे द्वयोः प्रणयन्तीति वाक्येन पूर्वपक्षिणा सौमिकप्रणयनातिदेशादुत्तरवे
दिमुपकिरन्ति न तु नासीरीय इत्युत्तरवेदिप्रतिषेधेऽप्राप्तस्य प्रतिषेधायोगाद्धेतुत्वेनोक्ताद्वाक्यैकदेशिना नातिदेशप्राप्तायाः
सौमिकोत्तरवेदेरयम्प्रतिषेधः किन्तूपात्तवपन्तीति प्राकरणिकवचनप्राप्ताया इत्युपन्यस्ते प्राकरणिकं वचनम्प्रथमोत्तमयोः पर्वणोः
प्रतिषेधमपेक्ष्य पाक्षिकीं प्राप्तिं मध्यमयोस्तु निःप्रतिपक्षमेव पाक्षिकामुत्तरवेदेः प्राप्तिं करोतीति विधिवैषम्यप्रसङ्गेन पूर्वपक्षिणा
मन्मते दूषिते परमसिद्धान्तिना पूर्वपक्ष्युक्तविधिवैषम्यभयादेव प्रथमोत्तमयोः पर्वणोरप्राप्तप्रतिषेधायोगान्न वेम्हदे व इत्ययं नि
त्यानुवादः उपात्तवपन्तीति तु द्वयोः प्रणयन्तीत्यस्यार्थवादः सहश्रुतं मध्यमयोरेव वरुणप्रघाससाकमेधपर्वणोरुत्तरवेदिविधा
ने न तु वचनातिदेशोऽयमिति प्रतिपादितम् । अत्र कश्चिदाह । भ्रातॄणामपुत्रधनग्राहित्वम्भरणमात्रस्य कुर्वीरन् स्त्रीणामाजीवन
क्षयादिति भरणोपयुक्तधनदानञ्च न तु स्त्रीणां मुख्यं यदाभरणमात्रोपयुक्तमेवापुत्रधनं ततोऽपि न्यूनं वा । तदापि किं भ्रातरश्च

वगृह्णन्ति पत्नी वेति विरोधे पत्न्या एव धनग्रहणम्पत्नी दुहितरइत्यादिना पूर्वपत्नीयस्त्वहापनायोच्यतइति । तदपि मन्दम् ।
पूर्वोक्तविधिवैयर्थ्यस्यात्रापि तादवस्थ्यात् । धनभागिति पदं वाक्यान्तरमपेक्ष्याल्पधने जीवनमात्रपर्याप्तधनभाक्त्वम्पत्नी विषयं
ये व दत्ति पित्रादिषु तु सकलधनभाक्त्वमिति । कथन्तर्हि विरोधपरिहार इति चेत् । शृणु । पितामहरेदित्यादिषु क्रमाप्रतीतेरपु
त्रधनग्रहणाधिकारमात्रप्रदर्शकानि तानि । योगीश्वरवचसि तेषामभावे पर्वस्य धनभागुत्तरोत्तर इति क्रमपरत्वात्पत्न्यादिग
णस्य निबद्धक्रमस्याभावे पितेषामर्थाविशेधात्पत्न्याद्यभावे पित्रादयो पुत्रधनग्राहिण इति । शङ्कितव्यभिचारयास्तु पत्न्याः ग्र
हीतेन धनग्रहणं निषिद्धम् । विधवा यौवनस्था चेन्नारी भवति कर्कशा । आयुषः क्षपणार्थं तु दातव्यं जीवनं तदेति । अस्मा
देव वचनादनाशङ्कितव्यभिचारायाः सकलभर्तृधनग्रहणङ्गम्यते । अत एव शङ्खवचने ज्येष्ठा वा पत्नीत्युक्तं ज्येष्ठा गुणैः प्रशंस्या ।
न तु वयोज्येष्ठा । मनुनापि वर्णक्रमेण ज्यैष्ठ्यं कथितम् । यदाह । यदि स्वाश्चापराश्चैव विन्देरन्योषितो द्विजाः । तासां वर्णक्र
मेण वै ज्यैष्ठ्यम्पूजा च वेश्म चेति । अतः परिणयनवयोभ्यां कनिष्ठापि सवर्णा वा सवर्णातो ज्येष्ठा सवर्णास्वपि गुणवती । तथा च
मनुः । भर्तुः शरीरशुश्रूषां धर्मकार्यं च नैत्यकम् । स्वा चैव कुर्यात्सर्वेषां नास्वजातिः कथंचन ॥ यस्तु तत्कारयेन्मोहात्सजात्या
स्थितयान्यया । यथा ब्राह्मणचाण्डालः पूर्वदृष्टस्तथैव सः । योगीश्वरोपि । सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा । तथा च य
ज्ञसंयोगात्पत्नीशब्देनापि सैवोच्यते । सवर्णायाश्चाभावे तु यानन्तरवर्णा सैव । तथा च विष्णुः । सवर्णाभावे त्वनन्तरैवापदि न त्वेव
द्विजः शूद्रया धर्मकार्यमिति । अत्र कुर्यादित्यनुवर्तते । तथा च ब्राह्मणस्य ब्राह्मण्यभावे क्षत्रियैवापदि न तु वैश्या शूद्रे परिणी
तेष्वपि । क्षत्रियस्य क्षत्रियायाश्चाभावे वैश्यैव । वैश्यस्यानन्तरापि शूद्रा न किन्तु सैव । शूद्रायाः सर्वथा निषेधात् । तथा चानाश
ङ्कितव्यभिचारा सवर्णा क्रमेण भर्तृधनं गृहीत्वान्याः सपत्नीः परिपालयेत् । वपुःसादृश्यस्तु यथास्वं विभज्य गृह्णीयुः । अतः पत्नीत्ये
कवचनं तज्जात्यभिप्रायेण । तस्मादपुत्रस्यासंसृष्टिनो विभक्तस्य प्रमीतस्य साध्वी भार्या तत्तद्धनाधिकारिणी विभक्तासंसृष्टिनोर

पुत्रयोः साध्व्यपि भरणमात्रं भ्रातृदारा मपुत्रा इत्यादिनारदादिवचनाल्लभते । व्यभिचारिणी तु भरणमपि न । आकिञ्चकारित रास्त्वित्यभिधानात् । यत्तु व्यभिचारिणीनामप्यशनवसनदानमुक्तम् । एवमेवंविधं कुर्य्याद्योषित्सु पतितास्वपि । वस्त्रान्नमात्रं देयं तु वसेयुश्च गृहान्तिके इति । तन्नु । द्रुताधिकसम्पत्तिनामपि पिण्डमात्रोपजीविनीम् । परिभूतामधःशय्यां वासयेद्व्यभिचारिणीमिति । भर्तारम्प्रत्युपयोगीश्वरेरणाभिधानात्तद्विसंवादेन भर्तृविषयकम् । तदपि प्रायश्चित्तावधि । अथैतद्व्यात्तद् कुर्वन्तीनां त्वनेनापि निष्कासनमित्यादि प्रायश्चित्तप्रकाशे विवेक्ष्यामः । पत्नी दुहितर इत्यस्य विभक्तासंसृष्टिविषयत्वं विभागस्य पूर्वमुक्तत्वात् संसृष्टिविभागस्य च सर्वापवादेनाग्रे वक्ष्यमाणत्वाद् बोद्धव्यमिति तत् इति विज्ञानेश्वरलक्ष्मीधरस्मृतिचन्द्रिकाकारविश्वरूपमेधातिथिमदनरत्नकारादीनां समतम् ॥ अपुत्रपदम्पत्नीत्यादिसूत्रमध्यमपौत्रप्रपौत्राभावोपलक्षणम् । प्रपौत्रपर्य्यन्ताभाव एव पत्न्याधनग्रहणौचित्यात् । पुत्रपौत्रैर्ऋणं देयमिति वचने पौत्रस्यापि ऋणदानेऽधिकाराभिधानाद्रिक्थग्राहकान्तरसत्त्वे च कथयाच कदाचन्द्रापद्इति वचनात् सर्वपिण्डदानाधिकारे सर्वपि पौत्रे तत्प्राप्नुते तद्विधानासम्भवात् त्रिपुरुषपाचजत्वादिना ऋक्थग्रहणोरिक्थग्राह इत्यनेनैव तस्यापि तत्सिद्धेर्वैयर्थ्यं पौत्रविधेरतः पौत्रे च पिता महत्रऋक्थग्रहणेऽपि पुत्रवद्दृष्टान्तेयमित्युक्तेष्टव्याङ्गापूपिकयासतितद्विक्थग्रहस्यत्वसूत्रणाधिकारे दूरनिरस्तः । एवमेव प्रपौत्रेऽपिन्यायः । अत एव प्रपौत्रसंग्रहार्थम्पुत्रपौत्रैरिति बहुवचनमितरथा द्विवचनस्य स्वाभिप्रायकं बहुवचनमिति वा कल्प्यं स्यात् । एवञ्चायमर्थः । पुत्रस्य पौत्रस्य पुत्रस्य पौत्रः पुत्रपौत्रः स चेत्विद्यते तत्पुरुषे भरमावृत्तपुत्रपौत्रपदे पुत्रस्य पौत्रश्चनाविति द्वन्द्वे पुत्रपौत्रौ च पुत्रपौत्र इति द्वन्द्वे तत्पुरुषरूपपुत्रपौत्रपदे सरूपैकशेषे बहुवचनोपपत्तिः । पुत्रपौत्रप्रपौत्रैरितियावत् । पौत्रपदं प्रपौत्रोपलक्षणम्वा । पुत्रापेक्षया पौत्रस्य तदपेक्षया प्रपौत्रस्य ऋणदाने । विशेषप्रकारविधिरप्यत एव सङ्गच्छते । अन्यथा प्रपौत्रे विशिष्टविधिकल्पनापत्तिः । त्रयाणामनुपकारित्व अपार्वणविधिनापिण्डदानेनास्पष्टम् । तथा च मनुः । त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते । चतुर्थः सम्प्रदा

तेषाम्पञ्चमेनोपपद्यते। बोधायनोपि। पुत्रपौत्रप्रपौत्राननुक्रम्याह प्रपितामहः पितामहः पिता स्वयं सोदर्य्या भ्रातरः सवर्णा
याः पुत्रः पौत्रः प्रपौत्र एतानविभक्तदायादान् सपिण्डानाचक्षते। विभक्तदायादांश्च सकुल्यानाचक्षते। सत्स्वङ्गजेषु तद्गामी ह्य
र्थो भवतीति। अस्यार्थः। पित्रादिपिण्डत्रयेषु सपिण्डनेन भोक्तृत्वात् पुत्रादिभिस्तत्पिण्डस्यैव दानात्। यो हि जीवन् पिण्डदाता स
मृतः सन् सपिण्डनेन तत्पिण्डभोक्ता। एवं मध्यस्थितः पुरुषो जीवन् पूर्वेषां पिण्डदाता मृतश्च तत्पिण्डभोक्ता परेषाञ्जीवतां पिण्डसंप्र
दानेन मृतैश्च तैः सह दौहित्रादिदेयपिण्डभोक्ता च ते येषामयं पिण्डदाता ये वा तद्दत्तपिण्डभोक्तारस्तेऽविभक्तपिण्डरूपदायम
श्नन्तीत्यविभक्तदायादाः सपिण्डा एकपिण्डसम्बन्धात् पञ्चमस्य तु पूर्वस्य मध्यमः पञ्चमो न पिण्डदाता न च तत्पिण्डभोक्ता एवमधस्त
नोपि पञ्चमो न मध्यमस्य न पिण्डदाता नापि तद्भोक्ता। एतेन वृद्धप्रपितामहात्प्रभृति पूर्वपुरुषास्त्रयः प्रतिप्रणप्तृप्रभृत्यधस्तनपुरु
षास्त्रय एकपिण्डभोक्तृत्वाभावाद्विभक्तदायादाः पञ्चमप्रभृतय उभयतः सकुल्या इत्याचक्षते मुनिः कुलमात्रसम्बन्धात्। इदं सपि
ण्डत्वं सकुल्यत्वं दायग्रहणोपयोगित्वेनोक्तं तत्प्रकरणपाठात्। आशौचविवाहाद्यर्थं तु पिण्डलेपभुजामपि॥ लेपभाजश्चतुर्था
द्याः पित्राद्याः पिण्डभागिनः पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषमिति स्मरणात्। सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते इ
ति च। पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथेति योगीश्वरवाक्यैकवाक्यतया सप्तमे पुरुषे स्थितत्वादष्टमे विनिवर्त्तते इति व्याख्येयम्। ते
न यथा प्रत्तानान्तु स्त्रीणां त्रिपुरुषं विज्ञायत इत्याशौचप्रकरणपठितं तन्मात्रोपयोगि त्रिपुरुषं सापिण्ड्यं तथेदमपि भागमात्रो
पयोगीति ध्येयं। कात्यायनस्तु स्पष्टमेव। पुत्रपौत्रप्रपौत्राणामन्वयग्रहणमाह। अविभक्ते मृते पुत्रे तत्सुतं रिक्थभागिनम्। कु
र्वीत जीवनं येन लब्धं नैव पितामहात्। लभेतांशं स पित्र्यं तु पितृव्यात्तस्य वा सुतात्। स एवांशस्तु सर्वेषां भ्रातॄणां न्यायतो भवेत्।
लभेत तत्सुतो वापि निवृत्तिः परतो भवेत्। इति प्रपौत्रानन्तरमुक्तो यः प्रणप्तृप्रभृत्यनधिकारः स सपिण्डत्वेन ध्येयः। सकुल्य
त्वेन तत्स्यैव यथाप्रत्यासत्तिः। भ्रातॄणामेकजातानामित्यादि तु दायातिरिक्तश्राद्धादि पुत्रकार्य्यकारित्वपरं भ्रातृपुत्रस्य पुत्रीकर

णासम्भवेनान्यःपुत्रीकरणीयइतिनियमार्थम् ॥ अन्यथाभ्रातृपुत्रस्यभ्रात्रनन्तरमभिधानमपुत्ररिक्थहार्य्यभिधायकेवाक्येक्र
मपरेनसङ्गच्छेत । पुत्रादीनान्त्रयाणामपित्रादित्रिकमहोपकारकारित्वात्पुत्रादिभिर्गृहीतन्धनंस्वामिनएवोपकारकमुपका
रप्रत्यासत्यातदीयमेव । उपकारप्रत्यासत्तिश्चाभ्यर्हिता । यथाह । ज्येष्ठेनजातमात्रेणपुत्रीभवतिमानवः । पितॄणामनृण
श्चैवसतस्मात्सर्वमर्हति ॥ तस्मादितिहेतुत्वेनोपकारकत्वस्योपन्यासाद्दायभागप्रकरणेधनस्वाम्युपकारकत्वातिशयोयत्रास्ति
तस्यतद्धनस्यभवतिसएवतद्धनग्राहीतिप्रत्यासत्तेरौत्सर्गिक्यभ्यर्हितात्वेतिसूचितम् । पुत्रादीनांमहोपकारकत्वञ्चानेकश्रु
तिस्मृतिपुराणादिप्रसिद्धम् । तत्रश्रुतिर्हरिश्चन्द्रोपाख्यानेवहृचब्राह्मणे । यंत्विमम्पुत्रमिच्छन्तियेविजानन्तियेचन । किं
स्वित्पुत्रेणविन्देततन्नआचक्ष्वनारदेतिगाथयाहरिश्चन्द्रेणपृष्टोनारदोदशभिर्गाथाभिःपुत्रमाहात्म्यपराभिःप्रबोधितवानि
त्युक्तम् । सएकयापृष्टोदशभिःप्रत्युवाच ऋणमस्मिन्सन्नयत्यमृतत्वञ्चगच्छति । पितापुत्रस्यजातस्यपश्येच्चेज्जीवतोमुखमि
त्यादिनास्मृतयश्च । मनुविष्णू । पुन्नाम्नोनरकाद्यस्मात्पितरन्त्रायतेसुतः । तस्मात्पुत्रइतिप्रोक्तःस्वमेवस्वयम्भुवा । शङ्खलि
खितौ । पितॄणामनृणोजीवन्दृष्ट्वापुत्रमुखम्पिता । स्वर्गीसुतेनजातेनतस्मिन्संन्यस्यदृणम् । अग्निहोत्रन्त्रयोवेदायज्ञा
श्चैवसदक्षिणाः । ज्येष्ठपुत्रप्रसूतस्यकलांनार्हन्तिषोडशीम् । मनुविष्णुवसिष्ठहारीताः । पुत्रेणलोकाञ्जयतिपौत्रेणा
नन्त्यमश्नुते । अथपुत्रस्यपौत्रेणब्रध्नस्याप्नोतिविष्टपम् ॥ याज्ञवल्क्यः । लोकानन्त्यन्दिवःप्राप्तिःपुत्रपौत्रप्रपौत्रकैः । यस्मात्त
स्मात्स्त्रियःसेव्याःकर्त्तव्याश्चसुरक्षिताइति । पुराणादिषुतूपाख्यानानिपुत्रादिप्रशंसापराणीनिबहूनि । तस्मात्प्रपौत्रपर्य्यन्ता
भावेविभक्तासंसृष्टपतिरिक्थहारिणीपत्नीतिसिद्धम् । अत्रजीमूतवाहनः । वृहस्पतिविरोधान्नेयंव्यवस्थायदाह । विभक्ताभ्रा
तरोयेचसम्प्रीत्यैकत्रसंस्थिताः । पुनर्विभागकरणेतेषाञ्ज्यैष्ठ्यंनविद्यते । यदाकश्चित्प्रमीयेतप्रव्रजेद्वाकथञ्चन । नलुप्यतेत
स्यभागःसोदर्य्यस्यविधीयते । यातस्यभगिनीसातुततोंशंलब्धुमर्हति । अनपत्यस्यधर्म्मोयमभार्य्यापितृकस्य च । संसृष्टा

नान्नु यः कश्चिद्विद्याशौर्य्यादिना धनम्। प्राप्नोति तत्सदा तत्र योद्धांशं शेषाः समांशिन इति। अत्रोपक्रमोपसंहारयोः संसृष्ट
ष्टकीर्त्तनात्तन्मध्ये पठितमप्युत्तरं तस्य भागः सोदर्य्यस्य विधीयत इति वचनं संसृष्टिविषयमवश्यम्वाच्यन्नचानपत्यस्य धर्म्मा
थमभार्य्यापितृकस्य चेत्यभिधानात्पुत्रदुहितृपत्नीपितृणामभावे संसृष्टसोदराधिकारः प्रतीयत इति कथमस्य पत्नीबाधकत्वम्।
किञ्चान्नुप्यमर्हति संसृष्टाविभक्तभ्रात्रन्तरीयद्रव्यस्य मिश्रीभूतस्य लोपाशङ्कायामुपपद्यते। अविभक्तासंसृष्टधने तु विभक्तेका
लोपशङ्का न स्यात्संसृष्टविषयत्वमेवामीषां लिङ्गादपि। किञ्च। पत्नीतः पूर्वं भ्रात्रधिकारबोधकशङ्खादिवचनानां संसृष्टाविभ
क्तविषयत्वं विस्पष्टवचनान्तरन्यायाद्वा प्रबलादुच्यते। नाद्यः विस्पष्टविशेषवचनाभावात्। संसृष्टिनस्तु संसृष्टीत्यादि वक्ष्य
माणवचनन्तु भ्रात्रधिकारावसरे विशेषकथकं नामुमर्थमवगमयति। बृहस्पतिवचनन्तु पुत्रादिपितृपर्य्यन्ताभावे संसृष्टसोद
राधिकारबोधकं प्रत्युतासंसृष्टविषयकतामेवावगमयति। न द्वितीयः। न्यायो ह्ययम्वाच्यः। अविभागसंसर्गयोर्य्यदेकस्य धन
न्तदेवापरस्यापीति मृतस्य तत्र स्वत्वेऽपगतेऽपि जीवतस्तत्स्वत्वात्तद्गामिता युक्ता न स्वाम्यन्तरकल्पनेति। न चासौ युक्तः। अविभागसं
सर्गवतामप्यविज्ञातैकदेशव्यवस्थितप्रतिनियताश्रयमेव स्वत्वं न त्वेकैकत्र सर्वेषां नापि समग्रे अनेकस्वत्वोत्पादविनाशकल्पना
प्रसङ्गात्। किञ्च। पाणिग्रहणाद्धि सहत्वमित्यादि प्राग्लिखितगौतमादिवचनेभ्यः पत्न्याः परिणयादुत्पन्नम्पतिधने स्वत्वमविभ
क्तसंसृष्टभर्तृमरणे नश्यत्यन्यच्च न नश्यतीति कल्पनायाम्प्रमाणाभावः। पुत्रादिषु सत्सु तदधिकारशास्त्रबलादेव पत्नीस्वत्वना
शः कल्प्यते। अत्रापि संसृष्टाविभक्तभ्रात्रधिकारशास्त्रात्तन्नाशः कल्प्यत इति चेत्। अन्यस्य तादृशशास्त्रस्यादर्शनात्। अस्य
चेतरथा अन्योन्याश्रयप्रसङ्गादसिद्धेः। सिद्धे हि संसृष्टाविभक्तभर्तृमरणे पत्नीस्वामित्वनाशे भ्रात्रधिकारशास्त्रस्य तद्विष
यकत्वम्। सिद्धे च तस्मिन्पत्नीस्वत्वनाशकल्पनेति। अत एव योगीश्वरविष्ण्वादिवचने पुत्राद्यभावमेवोपात्तं न तु विभक्तत्वासं
सृष्टत्वे। विभागस्योक्तत्वात्संसृष्टिनान्तु वक्ष्यमाणत्वादर्थादुपात्ते एवेति चेत्। तर्हि मुख्यगौणपुत्रेषु रिक्थग्राहितयोक्तेषु तद

द्दितविषयत्वमप्यर्थात्सिद्धमीत्यपुत्रत्वमपिनोपादेयम् । अपुत्रस्यैतएवानेनैवक्रमेणेतिनियमार्थतयातत्सार्थक्यमन्ययोरपितु
ल्यम् । विभागोक्तपर्यवसानन्तुनजानीमेव । संसृष्टिवचनंभ्रात्रधिकारावसरेविधानार्थन्नपत्न्याद्यपवादार्थमित्युक्तमेवकिञ्च
। शङ्खलिखितादिवचनानामविभक्तसंसृष्टभ्रातृपरत्वेनादृशस्यापुत्रस्यधनन्तद्विधभ्रातृगामितदभावेपितरौहरेतामित्यस्यचार्थः
र्थःतदाचविकल्पनीयम् । किमविभक्तासंसृष्टौपितरौगृह्णीयातामिति । उताविभक्तसंसृष्टाविति । तत्रप्रथमःकल्पः
। तादृशयोःपित्रोःपत्नीबाध्यत्वात्कथंभ्रात्रभावेपत्नीतःपूर्वन्तयोरधिकारबोधः । नापिद्वितीयः । अविभक्तसंसृष्टपितृयाद्य
प्रसिद्धेःसर्वैषामविवादाद्वचनवैयर्थ्यात् । अपिच । यथापित्राभ्रात्राचविभक्तासंसृष्टधनेशरीरदातृतयाआत्मावैजायतेपुत्रःय
थैवात्मातथापुत्रइत्येकत्वस्मृतेर्द्धनदेहयोरपौत्रयोःपितुःप्रभुत्वात्पितृदेयपितामहप्रपितामहपिण्डयोर्द्वयोरपिपिण्डनेनमृ
तस्यपुत्रस्यभोक्तृत्वाज्जीवतिचपितरिपुत्राणांपार्वणपिण्डदानाभावाद्भ्रातृभ्यःपूर्वम्पित्रोरधिकारस्तथेतरत्रापियुक्तः । अविभा
गसंसर्गयोरविशेषाद्भ्रातुस्याधिकारोयुक्तोनतुमात्रभावेपितुरिति । किञ्चपित्रोरविभक्तसंसृष्टत्वविशेषणमनुपपन्नंमात्रास
हविभागाभावेनाविभक्तविशेषणानर्थक्यात् । अतएवसंसर्गाभावोऽपि । विभागपूर्वकत्वात्तस्य । यथाहबृहस्पतिः । विभक्तो
यःपुनःपित्राभ्रात्राचैकत्रसंस्थितः । पितृव्येणाथवाप्रीत्यासतत्संसृष्टउच्यतइति । एतेनयेषामेवहिपितृभ्रातृपितृव्याणांपितृपि
तामहार्ज्जितद्रव्येणाविभक्तत्वमुत्पत्तितःसम्भवतितएवविभक्तासन्तःपरस्परप्रीत्यापूर्वविभागध्वंसेनयत्तवधनन्तन्ममयच्च
ममतत्तवेत्यभिन्नतयैकपाकेनपूर्ववदेकगृहितयास्थिताःसंसृज्यन्ते । नपुनरनेवम्भूताद्रव्यसंसर्गमात्रेणावणिजामपिसम्भूय
समुत्थानेसंसृष्टत्वव्यवहारापत्तेः । प्रीतिपूर्वकाभिसन्धिरहितानांसौकर्य्यादिवशाद्द्रव्यमिश्रणेनव्यवहारादिकुर्वतांभ्रात्रा
दीनामप्यतएवनसंसृष्टिव्यवहारः । तस्मान्मातृगतोभ्रातृसद्भावाधिकारविरोधोदुःसमाधः । अतःप्रपौत्रपर्यन्ताभावएवावि
शेषेणापुत्रप्रमीतभर्तृधनेसमस्तेधिकारिणीपत्न्येवेत्यवगन्तव्यम्यम् । नत्वश्रुतासंसृष्टविभक्तगोचरत्वकल्पना । जितेन्द्रिया

द्वयोरप्येवमाहुः। प्रपौत्रपर्यन्ताभावे तस्या अपि भर्त्तुः श्राद्धादिनोपकारकत्वातिशयात्। पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं हरे
त्वेति मनुवचनादिभ्यः। व्यासोऽपि। मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता। स्नाता प्रतिदिनं भर्त्त्रे दद्यात्सलिलाञ्जली
न्। कुर्य्याच्चानुदिनं भक्त्या देवतातिथिपूजनम्। विष्णोराराधनञ्चैव कुर्य्यान्नित्यमनुव्रता॥ दानानि विप्रमुख्येभ्यो दद्यात्पुण्य
विवृद्धये। उपवासांश्च विविधान्कुर्य्याच्छास्त्रोदितान्शुभे॥ लोकान्तरस्थम्भर्त्तारमात्मानञ्च वरानने। तारयत्युभयन्नारी नि
त्यन्धर्म्मपरायणेत्यादि। तस्मात्पत्न्या अपि पतिनिरकनिस्तारकत्वाद्धनहीनतया वाऽकार्य्यं कुर्वन्ती स्वीयापुण्येनार्द्धशरीरं संस्तपा
प्यत्यर्द्धं शरीरस्य यस्य भार्य्या सुराम्पिबेदित्यादिलिङ्गदर्शनात्पतिमपि पातयेदिति तया गृहीतं स्वाम्यर्थमेव तद्धनं भवतीति सर्वेभ्यो
न्येभ्यः पूर्वम्पत्न्या एव पतिधनग्रहणं युक्तम्॥ शङ्खादिवचने तु व्यवहितयोजना कार्य्या। अपुत्रस्य पुत्रपौत्रप्रपौत्ररहितस्य स्व
र्य्यातस्य धनं ज्येष्ठाप्रथमस्य तमा पत्नी लभते। तदभावे दुहितृदौहित्रयोश्चाभावे पितरौ लभेयातान्तदभावे भ्रातृगामीति। त
दभाव इति मध्यपठितम्पूर्वोत्तराभ्यामविरोधान्न्याय्यस्य पूर्वमुक्तत्वाच्च सम्बध्यते। भ्रातॄणामप्रजाः प्रेयादित्यादीनि नारदादि
वचनान्यपत्नीरूपपरिणीतस्त्रीविषयाणि। स्त्रीशब्दमात्रोपादानात्तत्र। अत्र च पत्नीशब्दोपादानात्। परिणीतानामपि पत्
नीत्वम्प्राक्प्रपञ्चितम्। अत एव नारदस्यैव वचनान्तरे। अन्यत्र ब्राह्मणात्किन्तु राजा धर्म्मपरायणः। तत्स्त्रीणां जीवनं दद्या
देष दायविधिः स्मृत इति॥ स्त्रीशब्दश्रवणादपत्नीनामब्राह्मणस्त्रीणां वर्त्तनदानमाह। पत्नीनान्त्वब्राह्मणस्त्रीणामपि कृत्स्न
भर्त्तृधनाधिकारमाह बृहस्पतिः। येऽपुत्राः क्षत्रविट्शूद्राः पत्नीभ्रातृविवर्जिताः। तेषान्धनं हरेद्राजा सर्वस्याधिपतिर्हि सः
। पत्नीभ्रातृविवर्जिता इति सब्रह्मचारिपर्य्यन्ताभावोपलक्षकम्। तेषां वक्ष्यमाणत्वान्मध्ये राज्ञोऽननुप्रवेशात्। प्रदर्शितविष्णुव
चने सहाध्यायिपर्य्यन्तानभिधाय तदभावे ब्राह्मणधनवर्ज्जं राजगामीति कथनाच्चेति तत्त्वं विविनक्ति स्म। तत्रेदमालोचनीयं। ना
रदशङ्खादिवचनानामविभक्तसंसृष्टिविषयत्वेन या व्यवस्था तत्र न्यायविरोधो वा दूषणं वचनविरोधो वा। न तावन्न्यायविरोधः।

बाधकन्यायस्याभावात्। प्रत्युत साधकोन्यायोस्ति। तथाहि। अविभक्तप्रमीते तावत्तस्यांशएव नाभूक्तिमियं गृह्णातु संसृष्टे ज्ञा
तोप्यंशः पुनः साधारणस्वत्वात्पत्न्यापगतः। नच साधारणस्वत्वाश्रयोप्यविविक्तस्तद्भागोस्त्येवेति वाच्यम्। अस्तु तावत्तापि यत्प्रति
योगिकं साधारणं स्वत्वं तदपगमे विद्यमानस्वत्वकः संक्रमएवोचितो नत्वन्यस्वत्वोत्पत्तिकल्पना। पाणिग्रहणाद्धि सहत्वं कर्मसु
तत्फलेषु द्रव्यपरिग्रहेषु चेति गौतमवचनात्तत्पत्न्या अपि तद्भागेऽविविक्तेपि स्वत्वमुत्पन्नं तन्नाशः किमिति तत्स्वत्वे कल्प्यत इति चेन्न
। औपपत्तिकोस्ति न तु तात्त्विकः। पत्न्याः पतिद्रव्ये स्वत्वं क्षीरनीरवदेकलोलीभावापन्नं सहाधिकारिककर्मोपयोगि न तु भ्रात्रादीना
मिव परस्परं। ततएव तेषां विभागो न तु जायापत्योः। एतन्न्यायमूलकमेव जायापत्योर्न विभागो विद्यत इति वचनम्। तथाच प
त्युः स्वत्वापगमे तस्याः स्वत्वापगमस्तत्रावश्यकः। एवञ्चाविभक्तसंसृष्टिपतिस्थापनेये पत्न्याः स्वत्वोत्पत्तिः कल्प्यतामविभक्तसंसृष्टि
स्वत्वस्य सतोः साधारणमेवेति वीक्षायामुत्तरपक्षकक्षीकरणमेवोचितं लाघवात्। नच पत्न्येव विभागप्रतियोगिनी॥ प्रापकप्रमा
णाभावात्। नचैतान्येव वचनानि प्रापकाणि। तेषां विषयविवादाद्विभक्तासंसृष्टिविषयत्वेनाप्युपपत्तेः। अतएवान्योन्याश्र
योपि दवीयान्। विमर्शदशायान्तदप्रसङ्गात्। सति विमर्शे तद्विषयत्वनिश्चयादेव। अविभागसंसर्गवतामपि पत्न्यादिचयदु
क्तन्न्यायास्मत्पक्षक्षतिभ्रमम्। प्रतिनियताविविक्तस्वत्वस्वीकारेपि संसृष्टाविषयतायान्न्यायान्तरविरुद्धत्वात्। नचाश्रुतविभक्त
संसृष्टविषयत्वम्पत्न्यादिवाक्यानामप्रमाणकम्। विरुद्धनारदादिवचनानां व्यवस्थान्तरासम्भवे पूर्वोपपादितन्यायोपष्ट
म्भार्थापत्तेरेव प्रमाणत्वात्। व्यवस्थान्तरसम्भवश्चवक्ष्यामः। नच यथा विभागस्योक्तत्वात्संसृष्टिनाञ्च वक्ष्यमाणत्वादर्थाद्विभक्त
संसृष्टिधनपरत्वम्पत्न्यादेर्यातीति तदनुपादानं तथामुख्यगौणपुत्रविभागमुक्त्वा पत्न्यादिवचनारम्भात्पुत्रधनविषयत्व
त्वमपि सिद्ध्यति तेषामिव पुत्रसत्वेपि न वाच्यमिति वाच्यं। एकएवौरसः पुत्रः न भ्रातरो न पितरौ पुत्रा रिक्थहराः पितुरित्यस्यार्थस्य स्मृ
त्यन्तरोक्तस्य योगीश्वरेण वचनान्तरेणानुक्तेस्तदवबोधनार्थत्वात्। अन्यथा जीवदजीवद्विभागयोः सत्स्वपि पुत्रेषु पितृपत्नीनां यथ

अभावान्तथात्रापीति शङ्कास्यात् । पुनर्विभागपर्यवसानत्वज्ञानान्न तच्छङ्कावसर इति यदि तर्हि सूत्रान्तरेष्वेक एवौरसो तत्
भ्रातरेण नपि तर इति स्वतंत्रस्यमुख्यगौणपुत्रसत्वे पत्न्याधनाधिकारप्रतिपादकस्यास्य सूत्रस्यानर्थक्यं स्यात् स्पष्टीकरणा
र्थे अर्थन्यायसिद्धमपि निबध्यते व्यवहारशास्त्र इति समाधिः पदमात्रे सूत्रसंस्तुवदः । सत्यार्थे विभक्तासंसृष्टत्वेऽपि सु
तानेपान्तरेति चेत् । स्वतन्त्रेच्छत्वान्मुनीनाम् । आसेपेसति विभिन्नानुसरणमिति न्यायेन चयचन्यायार्थसिद्धत्वमतम
स्ति । तत्रासिद्धस्य गतिश्चिन्तनीयेति रीत्या स्पष्टीकरणार्थं तथा वैयर्थ्यं परिह्रियते ननु तदभिधानमपादानं सर्वं वोचितम्
। यत्र संसृष्टिनस्तु संसृष्टीयस्य भ्रात्रधिकारप्रसरे विशेषविधानमात्रार्थत्वात् पत्न्याद्यपवादकत्वमित्युक्तमिति वार्त्तम् ।
तु शब्दविरोधात् । अन्यसोदर्य्यपूर्वापवादसन्दर्भाच्च । अत एव प्रतिवाक्यं तु शब्दोपादानम् । अतौचादिवाक्यमुत्रादिसकल
दायग्रहणाधिकारिसंज्ञीवत्वादिनाधिकारापवादकमिति । अत एवमिताक्षरायाम्विज्ञानेश्वरेणाचार्य्येण तत्र तत्रैवतानि वच
नान्यवतारितानि व्याख्यातानि च । यत्तु किञ्चेत्यादिना शङ्खलिखितवचनेभ्रातृभावेऽपि तोरधिकारेविकल्पस्यलिखनस्याद
प्यतिफल्गु । भवद्भन्मयापि व्युत्क्रमेण विभक्तासंसृष्टपितृपरत्वेन तस्य व्याख्यातुं शक्यत्वेनैकापर्य्यपनुयोगात् । यच्चापिचे
त्यादि । तदपि तुल्ययोगक्षेममित्युपेक्ष्यम् । यदपि किञ्चेत्यादि । तदपि मातृवंशेविशेषणासम्बन्धेऽपि योग्यतयापित्र
शेसम्बन्धादद्धेयम् । वस्तुतस्तु साक्षान्मात्रा विभागाभावेऽपि जीवद्विभागेऽपि निच्छया तस्या अपि भागसम्भवाज्जीवद्विभा-
गे तु साक्षादेव विभागोक्तेः प्रीत्याऽभिसन्धिविशेषपूर्वकम्पुत्रैः सह संसर्गासम्भवात् । नचैवं विभक्तो यइत्यादि बृहस्पतिवचन
विरोधः । अत एव मिताक्षराकृतापुत्रम् । संसर्गो यनयेन केनापि । किन्तु पित्रापितृव्येण वेत्यत्र सम्मतिमेनतद्वचनमुपन्यस्त
तेति वाच्यम् । यतस्तथा सति सकललोकव्यवहारसिद्धे दौहित्रादिसंसर्गोऽप्यन्याय्यः स्यात् । तस्माद्येषाम्परस्परविभागस्ते
षामेव तत्पूर्वकः परस्परसंसर्गोऽप्यभिसन्धिविशेषपूर्वको न परस्परद्रव्यमिश्रीकरणमात्रेणावर्णागादीनामिवेत्यत्र बृहस्पतिवच

ननानपत्यैन्नमात्रादिनिवृत्तौ । त्रिदोषपरिसंख्यापत्तेः । अत एवम्मात्रावापितृव्येणाथ वेत्यनास्थायां वादिशब्दस्त्वोपात्तः ।
रत्नाकरे चण्डेश्वरेणाप्युक्तम् । अनास्थायां वाकारः । तेन पितृव्यजेनांशिनाकृतविभाग एकत्र स्थितः संसृष्टः सर्वलोकगृहीतो
लभ्यत इति । वाचस्पतिरप्येवमेवाह । यत्तु तेनोक्तं पृथग्धनानामेकत्र मेलनमेव संसर्गो लाघवात् । ननु विभागपूर्वकत्वन्तत्र वि
शेषणम्परस्परानुमतिश्च तत्र हेतुरिति । तन्न । पुनःशब्दविरोधात् विभागेपि संसर्गशब्दप्रयोगापत्तेः । जन्मना स्वत्वानङ्गीका
रेण तत्रापि धनसम्बन्धाभावेन पुत्रद्वारैव तत्सम्बन्धात्प्रसक्तो रिक्थलोभेन नियोगस्वीकारः प्रतिषिध्यते । न चात्रापि पत्नीभिन्नाया
भार्य्याया भर्त्तुर्धनानधिकारात्तस्या एव रिक्थलोभेन प्रसक्तो निषिध्यते नियोगस्वीकार इति न भवदुक्तप्रसक्तिप्रतीक्षेति वाच्यम् ।
पत्न्या एव तत्र प्रस्तुतत्वात्तद्भिन्नभार्य्यापरत्वानुपपत्तेः । अत एव धारेश्वरादिभिर्न्नियोगार्थिपत्नीपरत्वे पत्नीत्यादिवाक्यस्येदमेव व
सिष्ठवचनम्प्रमाणतयोपन्यस्तम् । तस्मान्नारदवसिष्ठवाक्यबलात्संसृष्टिभर्तृधनग्रहणप्रतिषेधः पत्न्या बृहस्पतिवचने चानपत्य
स्य धर्म्मीय मभार्य्यापितृकस्य चेति कथनात्पत्न्यां सत्यां सोदरस्यापि संसृष्टिभ्रातृधनग्रहणप्रतिषेध इति विरोधश्चावश्यकः कथ
ञ्चिद्विषयव्यवस्थया परिहर्त्तव्यौ परिहृतौ नान्यैः परिह्रियते । सन्दंशोत्थितप्रकरणबलात्प्रसक्तमप्यभार्य्यापितृकस्य संसृष्टिवि
शेषणत्वमन्यथासिद्धनारदादिवाक्यानुरोधात्संसृष्टिपरत्वावश्यकतया बाध्यते । वाक्यविरोधे प्रकरणस्याप्रयोजकत्वात् । न
चायमिति सर्वनाम्ना संसृष्टिधनग्रहणरूपधर्म्मस्य प्रक्रान्तस्यानेन विशेषाभिधानादनपत्यस्येतिवद् भार्य्यापितृकस्येत्यस्यापि सं
सृष्टिप्रमीतविशेषणत्वमिति वाक्ययोरैकवाक्यं विरोधः स वाक्यप्रकरणयोरिति वाच्यम् । सर्वनाम्नः संसृष्टिधनग्रहणपरामर्श
कत्वेपि सोयमनपत्यसंसृष्टिस्वामिकधनग्रहणरूपो धर्म्मो भार्य्यापितृरहितस्यासंसृष्टिनोप्यनपत्यस्य प्रमीतस्य । असंसृ
ष्टिविभक्तप्रमीतस्य धनन्तु भार्य्यापितृसहितस्यैवानपत्यस्य सोदरो गृह्णीयान्न भार्य्यापित्रन्यतरवदिति वाक्यार्थोपपत्तेः । चका
रोप्येवमनुक्तासंसृष्टिसमुच्चयार्थो व्याख्येयः अतश्चासंसृष्टविषयेणानेन प्रकरणविच्छेदे जाते संसृष्टानान्तु यः कश्चिदित्यपिम

वाक्ये संसृष्टपदोपादानमपि सार्थकं भवति ॥ अन्यथा प्रक्रमादेवात्रापि तल्लाभे तन्मन्दप्रयोजनं स्यात्। अत एव तार्त्तीये निवि
दधिकरणेऽसम्बद्धनिविद्विच्छिन्नसामिधेन्यवान्तरप्रकरणाग्राह्यमुपवीतं न सामिधेन्यङ्गमपि तु महाप्रकरणाद्दर्शपूर्णमासाङ्ग
म्। ये तु पञ्चाम्नाता गुणास्ते पुनर्वचनादेव दूरस्थानुवादेनैव द्वादशोपसत्त्ववत्सामिधेन्यनुवादेन विधीयन्त इति भट्टमतेन सिद्धा
न्तितम्। वस्तुतस्तु यातस्य भगिनीत्यनेन सोदराभावे भगिन्यधिकारः संसृष्टिधने प्रतीयते। तस्यैवाव्यवहितस्यानपत्यस्येति
वाक्यशेषस्थेनायमिति सर्वनाम्ना परामर्षस्तत्र च न कोपि विरोधः। चन्द्रिकायामप्येवमेवोक्तम्। अविभक्तापुत्रपतिस्वामिकस्व
त्वधनग्रहणन्तु पत्न्याः कात्यायनवचनविरुद्धम्। यदाह। स्वर्याते स्वामिनि स्त्री तु ग्रासाच्छादनभागिनी। अविभक्ते धनांशे
तु प्राप्नोत्यामरणान्तिकम्॥ तुशब्दो वाशब्दार्थे न तथा चायमर्थः। या साच्छादनमेव साक्षाल्लभते आमरणान्तिकं यावज्जीवं या
वता धनेन जीवनं स्यादधिकारिकमावश्यकञ्च कर्म सिद्ध्यति तावन्तं धनांशं सा प्राप्नोति। धनांशमामरणान्तिकमित्युक्तेः कृत्स्नधन
मविभक्तस्य पत्न्युर्लभत इति निरस्तम्। न च स्त्रीशब्दस्वरसात्पत्नीव्यतिरिक्तस्त्रीपरमिदमपीति वाच्यम्। अविभक्त इति विशे
षणानर्थक्यापत्तेः। विभक्तेपि भर्त्तरि पत्नीभिन्नाया अपुत्राया भरणमात्रोक्तेः। अत एव कृतेप्यंश इत्यनुवृत्तौ वृहस्पतिः। प्रदद्या
त्स्वैव पिण्डस्त्रक्षेत्रांशं वा यदीच्छति। अस्य व्याख्यानं स्मृतिचन्द्रिकायां। पिण्डग्रहणमशनाच्छादनोपलक्षणार्थं तात्पर्य्यान्नधन
न्तस्याम्यादेकं क्षेत्रांशं वा स्वरूप्यामं ग्राह्ये पत्नीव्यतिरिक्तविधवायै भ्रात्रादिस्तद्धनग्राही प्रदद्यात्॥ एवकारः प्रदानस्यावश्यक
त्वार्थ इति। एतद्विषयकमेव नारदवचनम्। यावन्त्यो विधवाः साध्व्यो ज्येष्ठेन श्वशुरेण वा। गोत्रजेनापि वान्येन भर्त्तव्याश्छा
दनाशनैरिति॥ भर्तृधनग्राहिणो नियमविशेषः। धनग्रहणनिमित्तत्वाद्भरणं स्यात्। साध्व्य इत्यनेन सर्वत्र साध्वीनामेव भरण
मसाध्वीनान्तु पत्नीनामपत्नीनाञ्च न तदपि। आच्छिंद्युरितरास्त्विति प्रागुक्तनारदवचनवाक्यशेषादिभ्यः॥ अत एव साध्वीनां
जीवनार्थं श्वशुरादिभिर्दत्तमन्यैरपि दायादैर्नापहरणीयमित्यप्याह वृहस्पतिः। स्थावरादिधनं स्त्रीभ्यो यद्दत्तं श्वशुरेण तु। न

तच्छ्रवयमपाहर्तुं दायादैरिहार्हति चेदिति ॥ अन्यादृशीनान्तु दत्तमप्यपहर्त्तव्यमित्याह कात्यायनः । भोक्तुमर्हति कृप्तांशं गुरुशु-
श्रूषणे रता । न कुर्य्याद्यदि शुश्रूषां चैलपिण्डे नियोजयेत् । अपकारक्रियायुक्ता निर्लज्जा चार्थनाशिका । व्यभिचाररता या च स्त्री
धनं न सार्हति ॥ नार्हतीत्यनेन न देयं जीवनपर्य्याप्तमपि । दत्तमपि च तादृश्याः सकाशादपहरणीयमिति द्वयमप्युक्तं भवति
। यत्तु तस्मात् स्त्रियो निरिन्द्रिया अदाया इति श्रुतिवचनं तन्मूलकञ्च अनिन्द्रिया ह्यदायादाः स्त्रियो नित्यमिति स्थितिरिति मनुवचन-
न्तद्द्वयमपि यासां सम्पृक्तं धार्म्मिकया धनग्रहणं नोक्तं तद्विषयमवसेयं । गौतममिताक्षरायां हरदत्तोऽप्येवमेवाह । केचित्तु निरिन्द्रि-
यपदसमभिव्याहारान्निरिन्द्रियामात्रपरत्वादिव्याकुर्व्वन्ति । दायादत्वांशे निरिन्द्रियानिषेधकल्पनावश्यम्भावात् । सर्गाद्यायपदस्य
प्राप्तेर्नित्यानुवादासम्भवात् । अनिन्द्रियत्वन्तु पुम्पारतन्त्र्यात् कश्चिदनुवादः । वस्तुस्वभावविपरीतनिषेधकल्पनस्य बाधात् ।
तस्मात् पूर्व्वोक्त एव समाधिः । पराशरस्मृतिटीकायां विद्यारण्यादिना यद्वचनं प्राप्तं तदविभाज्यमिति व्याख्यातं खलुः पत्नीवतग्रहे पत्न्या अं-
शो नास्तीत्यदायादपदस्यार्थः । तत्र हेतुरनिन्द्रिया इति इन्द्रियम्वै सोमपीथ इति सोमपीथे इन्द्रियशब्दप्रयोगात् ततो निर्गता इति सोमपा-
नानधिकृता इति पत्नीवतग्रहप्रशंसेति । इति पत्न्यधिकारविचारः ॥०॥ पत्न्यभावे दुहितरोऽपुत्रविभक्तासंसृष्टिधनभाजः । त-
था च मनुः । यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा । तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत् । बृहस्पतिरपि । अङ्गादङ्गा-
त्सम्भवति पुत्रवद्दुहिता नृणाम् । तस्मात् पितृधनन्त्वन्यः कथं गृह्णीत मानवः इति । अत्र पुत्रेण समा पुत्रवदिति च साम्याभिधा-
नेऽपि पुत्रे पित्रवयवानामाकुल्येन संक्रान्तेर्दुहितरि च पत्नीनां पुमान्पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रिया इत्यादिवचनैः स्मृतिष्वायु-
र्वेदे च प्रतिपादनात् पुत्रतुल्यत्वन्दुहितुरुक्तमिति द्रष्टव्यम् । आत्मनि । आत्मा वै जायते पुत्र इत्यात्मभूतपुत्रतुल्यायामित्यर्थः ।
तिष्ठन्त्यामित्यनादरे सप्तमी तामनादृत्येत्यर्थः । यद्यप्यनेनौरसपुत्राभावे दुहितुर्द्धनग्रहणमित्ययमन्यायस्तथापि गौणपुत्र-
पत्न्योरभावे दुहितुर्द्धनग्रहणमिति को न्यायः । उच्यते । नारदेन मन्दानुग्रहाय सोऽपि स्पष्टीकृतः । यदाह । पुत्राभावे तु दु-

हितातुल्यसन्तानदर्शनादिति। विवृतञ्चैतदन्तेनैव। पुत्रश्च दुहिता चोभौ पितुः सन्तानकारकाविति। अयमाशयः। पुत्रदुहितरावुभौ पितुः पौत्रदौहित्राख्यसन्तानकारकौ अतः सन्तानप्रवर्त्तकत्वस्य तुल्यत्वात् दुहितुरपि पुत्रवदधिकारः। पौत्रदौहित्राख्यसन्तानयोश्च स्वरूपतस्तुल्यत्वाभावात्कार्य्येण तुल्यत्वमभिप्रेतम्। कार्य्यमपि तदृणापाकरणरिक्थग्रहणलक्षणम्पुत्रपौत्रैर्ऋणं देयम्। पितामहद्रव्यमधिकृत्य च तत्र स्यात्सदृशं स्वाम्यम्पितुः पुत्रस्य चोभयोरिति वचनाभ्याम्पौत्रे सति दौहित्रस्य तदनधिकारात्। तेनादृष्टमत्र कार्य्यं श्राद्धकर्तृत्वम्। पूर्व्वेषान्तु स्वधाकारे पौत्रदौहित्रका मता इति विष्णूक्तेः। एवञ्च दृष्टादृष्टोपकारकस्वसन्तानमुखेनोपकारकपुत्रात्केवलादृष्टोपकारकस्वसन्तानमुखेनोपकारिका दुहिता न्यूना। न चैवम्पत्न्यपेक्षयाप्रत्यासन्नाऽजन्यात् दुहितेति पत्नीतः पूर्व्वं सैव धनमर्हतीति वाच्यम्। यतः सहाधिकारेणाग्निहोत्रादिवैदिककर्म्मोपकारिका कामाख्यपुरुषार्थसाधनतया सन्तानसाधनतया च दृष्टादृष्टोपकारकर्त्री देहार्द्धसंस्तुता पत्न्येव ततोऽधिका ततश्च पुत्राभाव इति पत्न्यभावस्याप्युपलक्षकम्प्राग्लिखितविष्णुवचनात् स्मार्त्तयोगीश्वरवचनात्। यद्यपि पुत्रकर्तृकश्राद्धे सम्प्रदानतया स्वयमेवादृष्टोपकारकः पिता दुहित्रपेक्षयाप्यासन्न इति पिता हरेदपुत्रस्य रिक्थमिति वचनस्यावसरस्तूचितो दुहितुः प्राक्। तथापि तस्यामात्मनि तिष्ठन्त्यामित्यनेन शारीरप्रत्यासत्त्या सैवाग्रेसरीति तदभावे तद्वचनस्यावसरः। बाधष्टोपादानेन तस्य क्रमपरत्वाभावात्। जीमूतवाहनस्तु दुहितुरधिकारे सन्तानकारकत्वस्य हेतोर्निर्द्देशात्सन्तानस्य च पिण्डदस्यैवोपकारकत्वात् पिण्डदस्यानुपकारकत्वे नान्यसन्तानात् सन्तानाच्चाविशेषात्पुत्रवती सम्भावितपुत्रा च दुहिता धनाधिकारिणी। विधवात्ववन्ध्यात्वदुहितृप्रसूत्वादिना विपर्य्यस्तपुत्रा पुनर्न्नाधिकारिण्येवेति दीक्षितमतमादरणीयमित्याह। तदपि चिन्त्यम्। प्राथमिककन्याधिकारस्य। अपुत्रमृतस्य कुमारी रिक्थं गृह्णीयात्तदभावे चोढा। हेतुनिर्द्देशस्य प्रत्यासत्त्यतिशयमात्रप्रदर्शकतयाप्युपपत्तेः। किञ्च। स्वयमेव कन्याया असम्भवे सम्भावितपुत्रायाः पुत्रवत्याश्चाधिकार इति वदन्हेतोर्व्यभिचारितान्दर्शयति। तस्मादस्मद्गुरीयैव प्रत्या

सन्यर्थतया हेतुर्व्याख्येयः । धारेश्वरदेवस्वामिदेवरातप्रभृतयस्तु । पिताहरेदपुत्रस्येत्यादिवचनविरोधपरिहाराय दुहि-
त्रधिकारप्रतिपादकवचसां पुत्रिकाविषयत्वं तदभावे तु पित्रादय एव यथोक्तक्रमेणाधिकारिण इत्याहुस्तदतिपेलवम् ।
पुत्रिकायाश्चौरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः तृतीयः पुत्रः पुत्रिका विज्ञायत इति योगीश्वरवसिष्ठादिवचनैर्गौणपुत्र-
कोटिनिविष्टायाः क्षेत्रजादिपुत्रवत् भ्रातरो न पितरः पुत्रा रिक्थहराः पितुरिति गौणपुत्रविषयेण मानवेन वचनेन पत्न्यां सत्याम-
पि रिक्थग्राहिण्यास्तदभावे रिक्थग्राहित्वं दण्डापूपिकयैव सिद्धमिति वचनारम्भानर्थक्यापत्तेः । दुहितृमात्रवाचकानां वचना-
नां विनाकारणं विशेषपरत्वकल्पनानुपपत्तेश्च । किञ्च । भवन्मते अङ्गादङ्गात्सम्भवतीत्यादिना पुत्रिकाविषयेणैव वचसा पु-
त्रिकाया धनग्रहणोक्तेः पुनः । सदृशी सदृशेनोढा साध्वी शुश्रूषणे रता ॥ कृताऽकृता वापुत्रस्य पितुर्धनहरी तु सेत्यनेन पुन-
र्धनहरत्वप्रतिपादनं तेनैव मुनिना क्रियमाणं विवरणमात्रतयाऽपुनरुक्तं नैव स्यात् । सामान्यविशेषविषयतया तु स्पष्ट-
मेवापौनरुक्त्यं । सदृशोपि तु सवर्णा । सदृशेन सवर्णेनोढेति प्रकृष्टापकृष्टवर्णसम्बन्धनिरासाय । तज्जातस्योत्तमवर्णमाताम-
हश्राद्धादिनिषेधादिति जीमूतवाहनोक्तमनादेयं । ऊढापदेनैवाधमवर्णसम्बन्धनिरासात् । न ह्यधमवर्णेनोढत्वमुत्तमव-
र्णायाः सम्भवति । तस्मादुत्तमवर्णनिरासार्थमेव सदृशग्रहणम् । ननु नारदेन कन्यारूपाणामपि भ्रातृरहितानां सर्वासामे-
व दुहितॄणामपि पितृधनाप्राप्तिरुत्सर्गतोऽभिहिता । यथाह । स्यान्नु चेत् दुहिता तस्याः पित्र्योंऽशो भरणे मतः । आसंस्काराद्भरेद्भा-
गम्परतो बिभृयात्पतिरिति । तस्या इति पतिपुत्रविहीनपत्नीमधिकृत्याह । तेन तादृश्या यदि दुहिता विद्यते तेन तस्या भरणनिमि-
त्तमात्रं पित्र्योंऽशस्तस्मात् विवाहसंस्काराङ्गरणार्थमेव सा पितृधनभागं हरेत्परतो विवाहादूर्ध्वं पतिस्तां बिभृयात् । तेन तावत्का-
लभरणावशिष्टमपि ततो गृह्णीयात् । यथेष्टविनियोगार्थं तु कन्यायाः पितृधनग्रहणं दूरापास्तमेव । ततश्चास्यापवादकानि दु-
हितुः पितृधनप्राप्तिप्रतिपादकानि वचनानि सर्वाणि पुत्रिकाविषयाण्येव वाच्यानि । अन्यथा द्वयोरपि दुहितृसामान्यविषयतयो-

त्सर्गापवादत्वानुपपत्तेः । तस्माद्धारेश्वरादिमतमनुमन्तव्यमिति चेन्न । स्यादेवं यदि नारदवचनमविभक्तविषयं स्यात् । पौर्वा
पर्य्यपर्य्यालोचनया संसृष्टाविभक्तविषयन्तत्स्फुटमवगम्यते । ततश्चाविभक्तविषये दुहितृमात्रस्यापत्याभावे पितृधनेयं ग्रहणप्र
तिपादकानि प्रापकाण्येव नापवादकानीति न पुत्रिकामात्रविषयत्वे तेषां किमपि बीजम्पश्यामः । यत्तु सकलपितृधनग्रहणाधिका
रप्रतिपादकतया कन्याभ्यरित्यादि देवलवचनं स्त्रीमूलवाहनेनोपन्यस्तन्तत्पूर्वापरविरुद्धं । जीवद्विभागे कन्याभ्यः विवाहमा
त्रोपयुक्तधनेन तस्य प्रमाणतयोपन्यासात् । तदपि चास्माभिः प्राङ्निरस्तम् । दुहितृष्वपि प्रथममप्रत्ताः पितृधनं गृह्णीयुस्तदभा
वे प्रत्ताः । तासामपि मध्ये प्रागभावप्रतिष्ठितास्तदभावे प्रतिष्ठिताः । सर्वाः समानरूपास्तु समं विभज्य गृह्णीयुरित्यर्थः सिद्धम् ॥
तथा च कात्यायनः । पत्नी पत्युर्धनहरी या स्यादव्यभिचारिणी । तदभावे तदेति । गौतमः स्त्रीधनन्दुहितॄणामप्रत्तानामप्रतिष्ठि
तानाञ्चेति । अप्रतिष्ठिता निर्धनाः । यद्यपि स्त्रीधनमित्युक्तन्तथापि तुल्यन्यायतया पितृधनविषयमप्येतत् । वंध्यत्वादिना सन्ता
नरहिताप्रतिष्ठितेति तु न युक्तम् । तस्याः सन्तानमुखेनादृष्टोपकाराभावेन धनहारित्वायोगात् । सदृशी सदृशेनोढेति प्राक्प
ठितं बृहस्पतिवचनं स्मृतिचन्द्रिकाकार इत्थं व्याचख्यौ । अत्राद्यानि चत्वारि विशेषणानि पत्न्या ऊर्ध्वमर्थग्राहिणी दुहितृविषयाणि
। ततः प्राग्धनग्राहिणी दुहितृविशेषणे द्वे अवशिष्टे । कृताकृता वेत्यत्र पुत्रिकेति विशेष्याध्याहारः । इतरत्र दुहितेति विशेष्या
ध्याहारः । वाशब्दश्चाव्यवस्थितविकल्पार्थः । एवञ्चायमर्थः । औरसपुत्रविहीनस्य पितुर्धनं द्विविधापि पुत्रिका पत्न्याः पूर्वं गृ
ह्णीयात् । सवर्णादिविशेषणोपेतातु दुहिता तत ऊर्ध्वमिति । एवञ्च पत्न्या ऊर्ध्वं सवर्णादिविशेषणोपेतप्रतिष्ठिताप्रतिष्ठितो
ढानूढानां दुहितॄणां समवाये प्रागनूढैव गृह्णाति पित्रा भर्त्तव्यत्वात् । तदभावे ऊढाऽप्रतिष्ठिता । भर्त्राभर्त्तव्यत्वेपि भर्त्तुर्भरणासा
मर्थ्येनाप्रतिष्ठितत्वात् । तदभावे प्रागुक्तया पत्न्या सवर्णादिविशेषणोपेता प्रतिष्ठितापि धनं गृह्णाति । अन्यैस्तु कृतेति पुत्रिका
परमकृतेति दुहितृमात्रपरमभ्युपेत्य वाशब्दश्चानास्थापरमास्थायाखिलं दुहितृमात्रविषयं विशेष्याध्याहारमन्तरेणैव व्याख्यातं ।

सेयमनेनदुहितृमात्रपरामर्शात्। दुहितरइतिबहुवचनंसजातीयानांसमांशेसमानजातीयानांवर्णक्रमेणविशेषांशइतिप्रतिपादनाय ॥०॥ इतिदुहितुरधिकारः ॥ दुहितुरभावेदौहित्रः। चशब्दादनुक्तसमुच्चयार्थात्। तथाचविष्णुः। अपुत्रपौत्रसन्तानेदौहित्राधनमाप्नुयुः। पूर्वेषान्तुस्वधाकारेपौत्रदौहित्रकाःसमाः। अपुत्रपौत्रेतिदुहितृपर्य्यन्ताभावोपलक्षणम् ॥ मनुरपि। अकृतावाकृतावापियंविन्देत्सदृशात्सुतम्। पौत्रीमातामहस्तेनदद्यात्पिण्डंहरेद्धनमिति। पौत्रीत्यनेनयथापुत्राभावेपौत्रःपितामहधनाधिकारीतथादुहित्रभावेदौहित्रइत्युक्तम्। वृहस्पतिरपि। यथापितृधनेस्वाम्यन्तस्याःसत्स्वपिबन्धुषु। तथैवतत्सुतोपीष्टेमातृमातामहेधने ॥ यथायेनदौहित्रदेयपिण्डेनदुहितापितृधनाधिकारिणीतथैवतेनैवपिण्डदानेनदुहितृसुतोपिमातामहधनेस्वामीसत्स्वपिबन्धुषुपित्रादिष्वित्यर्थः। नचपुत्रिकापुत्रविषयमिदम्वचनम् ॥ तस्याइतितत्सुतइतिचसर्वनामभ्यांप्रकृतदुहितृमात्रपरामर्शात्। अतएवमनुरपिदौहित्रमात्रस्यैवमातामहधनाधिकारंदर्शयति। दौहित्रोह्यखिलंरिक्थमपुत्रस्यपितुर्हरेत्। सएवदद्याद्द्वौपिण्डौपित्रेमातामहायच। पौत्रदौहित्रयोर्ल्लोकेनविशेषोस्तिधर्म्मतः। तयोर्हिमातापितरौसम्भूतौतस्यदेहतइति। पितुरितिमातुःपितुरितिव्याख्येयम्। अतएवाग्रेमातामहायचेत्याह। अथवायथासस्वपितुरखिलंरिक्थंगृह्णातितथाऽपुत्रस्यमातामहस्यापि। स्वयमेवतत्पुत्रकार्य्यकारित्वात्। तदेवाहसएवेति। स्वपित्रेमातामहायचेत्यर्थः। मातापितराविति चनयथाक्रममन्वयः। किन्तु। पौत्रस्यपितादौहित्रस्यमाताधनस्वामिनोदेहतःसम्भूताविति यथायोग्यम्। केचिदपुत्रपौत्रेतियथाश्रुतविष्णुवचनात्पत्नीदुहितृतःप्राग्दौहित्रस्यधनाधिकारमाहुस्तद्योगीश्वरविरोधात्तथैवतत्सुतोपीतिवृहस्पतिवचनेपिदुहितृतस्तस्यजघन्यभावावगमाच्चहेयम् ॥०॥ इतिदौहित्राधिकारः ॥ दौहित्राभावेपितरौधनभाजौ। अत्रमिताक्षरा। यद्यपियुगपदधिकरणवचनतायांद्वंद्वस्मरणात्तदपवादत्वाच्चैकशेषस्यमातापित्रोर्द्धनग्रहणेक्रमोनप्रतीयते। तथापिविग्रहवाक्येमातृशब्दस्यपूर्वनिपातादेकशेषाभावपक्षेचमातापितराविस्यत्रमातृशब्दस्यपूर्वश्रवणात्पाठ

श्रीचरणैस्तु स्मृतिचन्द्रिकामिताक्षरयोर्द्वयोर्द्वयोरप्यनुसारेण द्वयमपि लिखितमन्नतु विविक्तम् । पुत्रादिभ्यः प्राग्दुहितृदुहितु
स्तदनु दौहित्राणामधिकार इति तु मिताक्षराचन्द्रिकामदनरत्नकारसम्मितं द्वारत्रयश्रीचरणानां च विसम्वादेन सम्मतः । जीमू
तवाहनदायतत्त्वकारौ तु दुहित्रभावे पुत्राणामेवाधिकारेण तु दौहित्र्याद्यधिकारानन्तरम् । तथा हि नारदवचने दुहितृणामन्तद
न्वय इत्यत्र दुहितुरन्वयपदेनान्वयपुत्रादिवाचकेन नान्वयः सम्भवति । दुहितृपदस्य जन्यविशेषवचनस्य जन्यान्तरे समन्वे
न निराकांक्षतयान्वयासम्भवात् । तच्छब्दस्यापि दुहितृत्वरूपेणैव तदुपस्थापकस्य नैराकांक्ष्याविशेषात् । किञ्च । याज्ञवल्क्य
वचने तावत् । दुहितर इति प्रथमान्तस्य ताभ्य इति च पञ्चम्यन्तस्य च षष्ठ्यन्तान्वययोग्येनान्वयपदेनान्वयासम्भवे हि तस्यापि मातु
रित्यस्यैवान्वयस्तदेकवाक्यतया त्रापि मातुरन्वय एव पुत्रादिर्गृह्यते न तु दुहित्रन्वयः । किञ्च । सत्स्वङ्गजेषु तद्गामी ह्यर्थो भवतीति
बौधायनवचनादनन्तराङ्गजपुत्राधिकार एव प्रत्यासत्त्या सूचितो न तु व्यवहिताङ्गजदौहित्रादेरित्याहुस्तन्मन्दम् । जन्यवाच
कस्य जन्यान्तरेणान्वये पुत्र इत्यादावप्यन्वयो न स्यात् । तज्जन्यप्रतिसम्बन्धितयान्वयाविरोधस्त्वत्रापि तुल्यः । अन्यथा दुहितुः
पुत्र इत्यत्राप्यन्वयो न स्यात् । तस्माच्छब्दव्युत्पत्त्यज्ञानमेवेदम् । याज्ञवल्क्यवचने च यद्यपि मातुरन्वयः पुत्रादिरेवोक्तस्तथापि
विभजेरन्सुताः पित्रोरित्यनेन प्राप्ताधिकाराणामेव चरणदानदुहित्रभावे पाधिकत्वज्ञापनार्थो नुवादस्तच्च दौहित्रानन्तरमप्य
विरुद्धः । सत्स्वङ्गजेष्विति बौधायनवचनन्तु मातृसाधारण्येन पुत्राणां धनाधिकारमात्रमङ्गजपदस्य चापत्यमात्रवाचकत्वा
त्पुत्रदुहितृसाधारणमधिकारं प्रतिपादयद्वचनान्तराविरुद्धं प्रत्यासत्त्यैव व्याख्यातुं युक्तमिति न किञ्चिदेतत् ॥ सन्तानाभावेत्वा
ह योगीश्वरः । अतीतायामप्रजसि बान्धवास्तदवाप्नुयुः । अप्रजसि दुहित्रादिप्रपौत्रपर्य्यन्तरहितायामतीतायां मृतायां
बान्धवा वक्ष्यमाणाः स्त्रीकोक्तास्तत्स्त्रीधनमवाप्नुयुः । विवाहभेदेन व्यवस्थया बान्धवानामधिकारमाह स एव ॥ अप्रजाः स्त्रीधन
म्भर्तुर्ब्राह्मादिषु चतुर्ष्वपि । दुहितृणां प्रसूता चेच्छेषेषु पितृगामि तद्दिति । चतुर्षु ब्राह्मदैवार्षप्राजापत्येषु । अपि शब्दाद्गान्धर्वे

परिग्रहः । यद्वाअतद्गुणसंविज्ञानबहुब्रीहिणाब्राह्मभिन्नादैवार्षप्राजापत्यगान्धर्वाश्चत्वारः । तेनब्राह्मदैवार्षगान्धर्वप्राजाप
त्येषुयद्धनम् । अप्रजायामतीतायाम्भर्त्तुरेवतदिष्यतइतिमनुवचनाविसंवादः । ब्राह्मादिविवाहोढायाधनमनपत्यायाभर्त्तुर्भव
ति । तदभावेभर्त्तुःप्रत्यासन्नानाम् । स्वामिप्रत्यासत्तेर्भर्त्तैवान्तरायेभर्त्तृप्रत्यासत्तेरेवपुरस्करणीयत्वात् । शेषेष्वासुरादिषुप
रिणीतायास्तुपितृगामि । एकशेषेणमातापितृगामि । तत्रापिप्राङ्मातृगामितदनुपितृगामि । पितरावित्यत्रोक्तान्न्यायात् ।
विरुद्धवचनान्तरभावाच्च । अतएवमनुना । यत्त्वस्याःस्याद्धनन्दत्तंविवाहेष्वासुरादिषु । अतीतायामप्रजसिमातापित्रोस्तदि
ष्यतइतिद्वन्द्वेमातृशब्दपूर्वनिपातेनमातुःप्राथम्यमवगमितम् । कन्याधनेचमातुरभावेपितुरधिकारश्रवणात्तत्रापितथैवौ
चित्यात् । यथाहबौधायनः । रिक्थम्मृतायाःकन्यायागृह्णीयुःसोदराःस्वयम् । तदभावेभवेन्मातुस्तदभावेभवेत्पितुरिति ।
मातापित्रोरभावेतत्प्रत्यासन्नगामि । पूर्वोक्तेषुसर्वेष्वेवविवाहेषुप्रसूतापत्यवतीचेत्दुहितॄणान्तद्धनम् । दुहितृशब्देनचा
त्रदुहितृदुहितरोलक्ष्यन्तइतिप्रागेवोक्तम् । तत्राप्यनूढादिक्रमोगौतमादितोदुहितृधनग्रहणकालेदौहित्रीभ्योपिप्रीत्या
किंचिद्दानमितिचप्रागेवनिरूपितम् । दौहित्रीणाञ्चमातामहीधनग्रहणम्भिन्नमातृकाणामिषममातृद्वारेण । पौत्राणा
म्पितृद्वारेणैव । प्रतिमातृवास्ववर्गेभागइतिगौतमस्मरणात् । जीमूतवाहनस्तु ॥ ब्राह्मादिविवाहेषुयद्धनन्तद्वानेनव्य
वस्थाप्यतेनतुतत्तद्विवाहोढायाःसर्वेधनम् । ब्राह्मादिषुयद्धनमितिसम्बन्धेवर्त्तमानसम्बन्धेक्तकाललक्षणानस्तदूढस्त्री
परत्वेऽतीतविवाहक्रियाद्वारकसम्बन्धेक्तलक्षणायाजघन्यत्वादित्याह । तदनुगामीदायतत्त्वकृदप्येवम् । तदपेशलम् ।
पूर्ववचनेअप्रजःस्त्रीधनम्बान्धवागृह्णीयुरितिसामान्यतउक्तेःकीदृश्याअप्रजसःकेवान्धवागृह्णीयुरित्येवाकांक्षोदयाद्ब्राह्मा
दिपदानान्तद्विशेषणत्वस्यौचित्यात् । यच्चवर्त्तमानभूतसम्बन्धक्तर्तविनिगमकमुक्तन्तदपितुच्छम् । विभागकालेऽतीतत्व
स्योभयत्राविशेषात् ॥ धनलाभकालेवर्त्तमानत्वस्यचाप्रयोजकत्वात् । विवाहजन्यभार्य्यात्वसम्बन्धस्यान्तरङ्गत्वाच्च । यत्तु

सर्व्वेष्वपि विवाहेषु पित्रोः सकाशात्तया प्राप्तम्विवाहोत्तरन्तद्भ्रातॄणामेव । यदाह कात्यायनः । पितृभ्याञ्चैव यद्दत्तं दुहितुः स्था
वरन्धनम् । अतीतायामप्रजसि भ्रातृगामि तु सर्वदा । विश्वरूपजीमूतवाहनौ तु कन्यादशायाय्यँत्पितृभ्यान्दत्तन्तद्भ्रातृगा
मि । विवाहात्परतो लब्धस्यान्वाधेयत्वात् । विवाहकाललब्धस्य च विवाहभेदेन भर्तृगामित्वान्मातापितृगामित्वाच्चेत्याहतुः । त
न्न । स्थावरविषयत्वादस्याविरोधात् । न च दण्डापूपिकया स्थावरग्रहणे जङ्गमग्रहणं भ्रातॄणामायात्येवेति वाच्यम् । अपवादे
तन्न्यायाप्रवृत्तेः । शुल्कन्तु सोदराणामेव । भगिनीशुल्कं सोदर्य्याणामिति गौतमवचनात्सोदराभावे मातुः । ऊर्द्ध्वं मातुरिति त
द्वचनादेव । पूर्वं चैक इति तु परमतम् । बन्धुदत्तं प्रथममप्रजसो मृतायाबन्धूनान्तदभावे भर्त्तुः । बन्धुदत्तन्तु बन्धूनामभावे भ
र्तृगामि तदिति कात्यायनवचनात् । पूर्व्वोक्ताप्रजः स्त्रीधनाधिकार्य्यभावेऽत्वाह बृहस्पतिः । मातृष्वसा मातुलानी पितृव्यस्त्री पितृ
ष्वसा । श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्त्तिताः । यदासामौरसो न स्यात्सुतो दौहित्र एव वा । तत्सुतो वा धनन्तासां स्वस्त्री
याद्याः समाप्नुयुः । अत्रौरसपदे नपुत्रपुत्र्योरुपादानन्तयोः सर्वापवादकत्वात् । अपवादक्रमश्च प्रागुक्त एव । सुतपदेन
च सपत्नीपुत्रस्य । सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् । सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्म्मनुरिति मनुवचनात् । न
तु सुतपदमौरसविशेषणमानर्थक्यात् । सपत्नीपुत्रसद्भावेपि स्वस्त्रीयाद्यधिकारापत्तेरनादिव्यवहारविरोधाच्च । तथा च दौ
हित्राभावे औरसपुत्रादिस्तदभावे सपत्नीपुत्रः । तत्सुत इति तच्छब्देन व्यवहितयोरौरससपत्नीपुत्रयोरुपादानन्नानन्तर
स्यापि दौहित्रस्य दौहित्रपुत्रस्य तस्य पिण्डदानेवहिर्भावात् । तथा च दौहित्रपर्य्यन्ताभावे प्रथममौरसस्तत्सुतस्तत्पुत्रपौत्रा
। पुत्रपौत्रैर्ऋणं देयमिति ऋणापाकरणाधिकारिणाम्पिण्डदानाधिकारिणाञ्च तेषामेव रिक्थग्रहणौचित्यात् । तदभावे सप
त्नीपुत्रतत्पुत्रतत्पुत्राणाम् । तेषामेव तदापिण्डदातृत्वादृणापाकर्तृत्वाच्च । प्रागुक्तमनुवचनाच्च । तदेषामभावे स्वस्त्रीयश्वश्रु
रादिषु सपिण्डेष्वनन्यगतिकैतद्वचनबलाद्भगिनीपुत्राद्यानामेव मातृष्वस्रादिधने प्रत्यासत्तितारतम्येनाधिकारः । स्नुषादीनां

नुयायाच्छादनमात्रभाक्तं । वचनविरोधे सपिण्डवत्प्रत्यासत्तेरप्रयोजकत्वात् । तस्मात्स्त्रियो निरिन्द्रिया अदायादा इति श्रुतेः
। अनिन्द्रिया ह्यदायाश्च स्त्रियोऽनृतमिति स्थितिरिति तन्मूलकमनुवचनाच्च । शृङ्गग्राहिकया यत्र कण्ठोक्तः पत्नीदुहितर इ
त्यादौ यासां स्त्रीणां धनाधिकारस्तासामेव । अन्यासान्तु श्रुतिमनुवचनाभ्यां दायग्रहणनिषेध एवेति स्मृतिचन्द्रिकाकारहरद
त्तादीनां दाक्षिणात्यनिबन्धृणां जीमूतवाहनादिपौरस्त्यसर्वनिबन्धृणां सिद्धान्ताच्च । इति स्त्रीधनविभागः ॥ ● ॥ अथ विभा
गकाले केनचिदपह्नुतस्य पश्चाज्ज्ञातस्य विभागप्रकारः । तत्र मनुः । ऋणे धने च सर्वस्मिन्प्रविभक्ते यथाविधि । पश्चाद्दृश्येत
यत्किञ्चित्तत्सर्वं समतां नयेत् । योगीश्वरः । अन्योन्यापहृतं द्रव्यं विभक्तैर्यत्र दृश्यते । तत्पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः
। अत्र समपदादुद्धारविभागो निषिद्धः विभजेरन्निति वचनाद्येनैव दृष्टं तेनैव न ग्राह्यं नाप्यपहर्त्रेऽल्पत्वात्तद्भागमिति बोध्यते ।
एतावता वचनार्थं वक्तुं स्तेयदोषाभावः समुदायद्रव्यापहारे । स्वबुद्ध्यागृहीतत्वादिति केषाञ्चिद्वचनम्प्रलापः । साधारणद्रव्ये पर
स्वत्वस्यापि सत्त्वेन परस्वापहारस्य स्तेयपदार्थस्यावारणीयत्वात् । अथ परकीयबुद्ध्यानगृहीतमिति न स्तेयमित्युच्यते । तत्राप
हृते परकीयबुद्धेरावश्यकत्वात् । अत एवापहृतमित्युक्तम् । ननु मनुना ज्येष्ठस्यैव समुदायद्रव्यापहारे दोषो दर्शितो न कनी
यसाम् । यो लोभाद्विनिकुर्वीत ज्येष्ठो भ्रातॄन्यवीयसः । सोऽज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिरिति । सत्यम्परन्तु स
म्भावितस्यास्य पितृस्थानीयस्य ज्येष्ठस्यापि दोषश्रुतेस्तत्परतन्त्राणाम्पुत्रस्थानीयानान्दण्डापूपन्यायेन दोषः सुतरामेव भव
तीति । अत एव समुदायद्रव्यापहारे समविभागवचनस्य स्तेयदोषाभावपरत्वमाचक्षाणा अनेन मनुवचनेन दूरापास्ताः । अपि
च येन दोषप्रतिपादिकया श्रुत्या च । यथा । यो वै भागिनम्भागान्नुदते चयते न सः । अथ वैनं न चयतेऽथ पुत्रमथ पौत्रं चयत
इति । यो भागिनम्भागार्हं भागान्नुदते निरस्यति । भागन्तस्मै कथञ्चिच्छलाद्वञ्चनया वा न प्रयच्छतीति यावत् । स भागान्नुदन्न एवं
लोकान्तरे च्यवते नाशयति दोषवशात् । यद्येनं न नाशयति तस्य पुत्रं पौत्रं वा नाशयतीति श्रुतेरर्थः । श्रुत्यज्ञास्तु प्रलपन्तु नाम साधारण

द्रव्यस्यापिपरस्वत्वेनापहारपदार्थेनपाथादिवयुक्तमेव। यथामौद्गेचरौविपन्नेमाषादृश्यात्प्रतिनिधितयामाषेषुगृह्यमाणेषुमुद्गा
वयवबुद्ध्यागृह्यमाणत्वादयज्ञियावैमाषाइतिनिषेधेनप्रवर्त्ततेमुद्गावयवबुद्ध्यागृह्यमाणत्वादितिपूर्वपक्षितेनिषेधस्यप्राप्ति
मात्रापेक्षित्वात्तत्रापिमाषावयवानामप्यवर्जनीयग्रहणंयज्ञसाधनत्वञ्चेतिनिषेधप्रवृत्त्यनपायात्प्रतिनिधितयापितदनुपादानं
सिद्धान्तितम्। राज्ञेतुभागिभिर्न्ननिवेदनीयंराज्ञेनिवेदितमपितेनसामादिनैवदापनीयमितिप्रीत्यविच्छेदादिदृष्टप्रयोजन
कमेवकात्यायनश्चाह। बन्धुनापहृतन्द्रव्यम्बलान्नैवप्रदापयेत्। अविभागकालेऽनेनवस्त्रभुक्तमित्यपिनवक्तव्यंभुक्तमपिराज्ञान्या
ह्यमित्याशयेनाहसएव। बन्धूनामविभक्तानाम्भोगन्नैवनिवर्त्तयेदिति। नहिन्यूनाधिकभोगोवारयितुंशक्योऽवर्जनीयत्वा
दितिभावः। एवंदृष्टार्थतयैवोपपत्तौनास्यापिस्तेयदोषाभावपरत्वमदृष्टार्थत्वापत्तेस्तस्मादत्रापिस्तेयप्रायश्चित्तंराजदण्ड
श्चभवत्येवेत्यवधेयम्॥०॥ अथाविभाज्यम्। तत्रयोगीश्वरः। पितृद्रव्याविरोधेनयदन्यत्स्वयमर्जितं। मैत्रमौद्वाहिकञ्चैवदा
यादानान्नतद्भवेत्। क्रमादभ्यागतन्द्रव्यंहृतमभ्युद्धरेत्तुयः। दायादेभ्योनतद्दद्याद्विद्ययालब्धमेवच। पितृद्रव्याविरोधेने
तिसर्वशेषः। स्वातंत्र्येपितृद्रव्योपघातेनयन्मैत्रादिकन्तस्याप्यविभाज्यत्वापत्तौमहाजनाचारविरोधोविद्यालब्धेनारदवचन
विरोधश्च। कुटुम्बम्बिभृयाद्भ्रातुर्य्योविद्यामधिगच्छतः। भागंविद्याधनात्तस्मात्सलभेताश्रुतोपिसन्निति। कात्यायनस्तुविभा
ज्यविद्याधनलक्षणमुखेनैतदेवदृढयतियथाह। परभक्तोपयोगेनविद्याप्राप्तान्यतस्तुया। तयाप्राप्तन्धनंयत्तुविद्याप्राप्तंतदुच्य
तइति। मनुरपिस्पष्टमाह। अनुपघ्नन्पितृद्रव्यंश्रमेणयदुपार्जयेत्। दायादेभ्योनतद्दद्याद्विद्ययालब्धमेवच। श्रमेणसेवादि
ना। क्रमादभ्यागतायाम्पितृद्रव्याविरोधेनोद्धृतायामपिभूम्याम्विशेषउक्तःशङ्खेन। पूर्वनष्टान्तुयोभूमिमेकश्चेदुद्धरेत्क्रमा
मात्। यथाभागंलभन्तेभ्योदत्त्वांशन्तुतुरीयकमिति। उद्धर्त्तैचतुर्थांशमुद्धरणमूल्यमधिकन्दत्त्वांशत्रयंसर्वैसमंविभजेरन्नि
त्यर्थः। यद्यप्येतादृशाविभाज्यत्वंयद्येनलब्धन्नतत्तस्यैवेतिन्यायादेवप्राप्तंतथापिप्रायोव्यवहारशास्त्रेन्यायसिद्धानुवादकान्येव

वचनानीतिपरिभाषाप्रकारोक्तप्रायश्चित्तमिति न दोषः। अविभाज्यान्तरमप्युक्तं मनुना। वस्त्रं पत्रमलङ्कारं कृतान्नमुदकं स्त्रि
यः। योगक्षेमं प्रचारञ्च न विभाज्यं प्रचक्षते॥ प्रचक्ष्यते पत्रं वाहनम्। वस्त्रादि यद्येन धृतं तत्तस्यैव। अधृतन्तु विक्रयाद्यं
विभाज्यमेव। कृतान्नं पक्वान्नं सर्वैर्यथाप्रतिभोक्तव्यं न तु तोलयित्वा विभाज्यम्। उदकमुदकाधारः कूपादिः सर्वैर्यथोपयोग
मुपभोज्यः। स्त्रियो दास्यो विषमा न विभाज्याः। पर्यायेण कर्म्म कारयितव्याः पित्रवरुद्धास्तु समा अपि न विभाज्याः। स्त्रीष्ववरु
द्धासु न विभाग इति गौतमवचनात्। योगक्षेमशब्दाभ्यामिष्टापूर्त्ते उच्येते। तयोरविभाज्यत्वम्पितृद्रव्यविरोधेनार्जितयोरपि दृ
ष्टान्ततयोच्यते। न हि स्वतः फलतो वा तस्य विभागः सम्भवति पैतृकस्य तु सुतरां। तथा चाह लौगाक्षिः। क्षेमं पूर्त्तं योगमिष्टमि
त्याहुस्तत्त्वदर्शिनः। अविभाज्ये च ते प्रोक्ते शयनासनमेव च इति योगक्षेमशब्देन तत्कारिणो राजमन्त्रिपुरोहितादय उच्यन्त इ
ति केचित्। शस्त्रचामरोपानत्प्रभृतय इत्यन्ये। प्रचारो गृहारामादिप्रवेशनिर्गममार्गाः। तस्याप्यविभाज्यत्वम्। पितृधृतं वस्त्रा
दिकं श्राद्धभोक्त्रे दातव्यम्। यथाह बृहस्पतिः। वस्त्रालङ्कारशय्यादि पितुर्य्यद्वाहनादिकम्। गन्धमाल्यैः समभ्यर्च्य श्राद्धभो
क्त्रे तदर्पयेदिति। स्त्रीधृतोऽप्यलङ्कारो न विभाज्यः। पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत्। न तं भजेरन्दायादा भजमानाः
पतन्ति ते इति। धृत इत्यनेनाधृतस्य विभाज्यत्वमेव। पत्यौ जीवतीत्यनेन पतिजीवनचिह्नतया यत्र देशे यो धार्य्यते स न विभाज्य इ
ति सूचितं। पितृप्रसादलब्धस्यापि न विभागः। पितृप्रसादाद्भुज्यन्ते वस्त्राण्याभरणानि च। भुज्यन्त इति वचनाद्विभाज्यत्वं। त
था पितृदत्तस्यापि पितृभ्यां यस्य यद्दत्तं तत्तस्यैव धनं भवेदिति वचस्मरणात्। पितृप्रसाददानप्रीतिदाने अयौतकत्वानुरोधेनैव ज्ञेये
न तु यथाकामं। महाजनाचारविरोधात्। पितृद्रव्याविरोधोपार्जितप्रपञ्चो भूयस्तु शौर्य्यादिविषयमादाय स्मृतिवचस्तु दृश्य
ते स ग्रन्थविस्तरभियान लिख्यते। अथ विभागानधिकारिणः॥ ०॥ तत्र योगीश्वरः। क्लीबोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः
। अन्धोऽचिकित्स्यरोगाद्या भर्त्तव्याः स्युर्निरंशकाः। तज्जः। पतितजः। क्लीबान्धौ यदि जन्मतआरभ्य तदा विभागानर्हौ वे

वयदित्वन्तरा । नष्टान्तदपगमस्तु दोषघातादिना । तर्हि दृश्यातद्विभागः स्यादायविशोधितादितिरीत्या विभागार्ह एवेति ध्येय
म् । आद्यग्रहणेनाश्रमान्तरगतपितृद्वेष्युपपातकिबधिरमूकनिरिन्द्रियाणां ग्रहणम् । यथाह वसिष्ठः । अनंशास्त्वाश्रमान्तर
गता इति । नारदोऽपि । पितृद्विट्पतितः षण्डो यश्च स्यादौपपातिकः । औरसा अपि नैतेंऽशं लभेरन्क्षेत्रजाः कुत इति । मनुरपि
अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा । उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रिया इति । व्याधिना निर्गतमिन्द्रियं यस्य स निरि
न्द्रियः ॥ तेन क्लीबाद्युद्देशः । कश्चित्तु निरिन्द्रियाः पाणिपादादिहीना इत्याह । एते क्लीबादयोंऽशभाजो न भवन्ति किन्तु ग्रासा
च्छादनदानादिना भर्तव्याः पोषणीयाः । अभरणे तु महान्दोषः । यथाह मनुः । सर्वेषामपि चैतेषान्दातुन्न्याय्यं मनीषिणा ।
ग्रासाच्छादनमत्यन्तम्पतितो ह्यददद्भवेदिति । अत्यन्तं यावज्जीवम् । तत्रापि पतितोपपातकिनोर्व्यावृत्तप्रायश्चित्ताचरणमनं
शित्वम् । औद्धत्यादिना प्रायश्चित्तमकुर्वतोस्तु निपतनमेव । एतेषां च विभागात्प्रागेव दोषभाक्त्वेऽनंशित्वम् । न पुनर्विभागोत्त
रमपि दत्तविभागापहरणे प्रमाणाभावात् । पश्चाद्दोषघातादिना दोषनिर्हरणे स्वेंऽशभागितेति विज्ञानेश्वराचार्याः । यु
क्तञ्चैतत् । दोषप्रयुक्तत्वाद्विभागानर्हतायाः । विभक्तेषु सुतो जातः सवर्णायां विभागभागिति न्यायसाम्यात् । पतितादिषु लि
ङ्गमविवक्षितमनुपादेयत्वात् । ब्राह्मणो न सुरां पिबेदित्यादिवत् । तेन यथासम्भवं पत्नीदुहितर इत्यादेरप्ययमपवादः ।
क्लीबादीनामनंशत्वेऽपि तत्पुत्राणामंशोऽस्तीत्याह योगीश्वरः । औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः । निर्दोषाः पूर्वोक्तानं
शत्वप्रयोजकदोषशून्याः । तत्र क्लीबस्य क्षेत्रजपुत्रः सम्भवत्यन्येषामौरसोऽपि पुत्रद्वयग्रहणमितरपुत्रव्युदासार्थं । पतितस्तु
तयोर्न भरणम् । तथा च देवलः । मृते पितरि न क्लीबकुष्ठ्युन्मत्तजडान्धकाः । पतितः पतितापत्यं लिङ्गी दायांशभागिनः । तेषां प
तितवर्ज्येभ्यो भक्तं वस्त्रं च दीयते । तत्सुताः पितृदायांशं लभेरन्दोषवर्जिता इति । लिङ्गी प्रव्रजितादिः । पतितपदेनात्र पतित
सुतस्यापि ग्रहणम्पतितेनोत्पन्नत्वेन तस्यापि पतितत्वात् । पतितापत्यम्पतितमेवान्यत्र स्त्रियाः सा हि परगामिनी भवतीति स्मृतेः ।

मृतइति विभागकालोपलक्षणं क्लीबवद्विभागेप्यनर्हत्वात्। कात्यायनोपि। अक्रमोढासुतश्चैव सगोत्राद्यश्च जायते। प्रव्रज्यावसि
तश्चैव न रिक्थं तेषु चार्हति। हीनस्त्रीपरिणयानन्तरमुत्तमस्त्रीपरिणयने द्वयोरप्यक्रमोढात्वं तयोः सगोत्रात् नियोगोत्पन्नः क्षे
त्रजः पुत्रो नार्हति धनं। अक्रमोढासुतस्त्वृक्थी सवर्णश्च यदा पितुः। असवर्णप्रसूतस्तु क्रमोढायाश्च यो भवेत्। प्रतिलोमप्रसूतः
मातास्तस्याः पुत्रो न रिक्थभाक्। ग्रासाच्छादनमात्रन्तु देयन्तद्बन्धुभिर्म्मितम्। बन्धूनामप्यभावे तु पित्र्यन्द्रव्यन्तदाप्नुयात्।
स्वपित्र्यन्तद्धनम्प्राप्नुन्दापनीया न बान्धवाः। क्लीबादीनामपि दारपरिग्रहे सपुत्रसम्भवश्चोक्तो मनुना। यद्यर्थिता तु दारैः स्यात्
क्लीबादीनां कथञ्चन। तेषामुत्पन्नतन्तूनामपत्यन्दायमर्हति। तन्तुरपत्यं। न च क्लीबादेरुपनयनाभावेन पतितत्वात् कथन्दा
रसम्बन्ध इति वाच्यम्। उपनयनानर्हतया उपनीतस्य शूद्रवत् पतितत्वात्। एतेषां क्लीबादीनां दुहितरो विवाहपर्यन्तं भर्त्तव्याः
संस्कर्त्तव्याश्च। नार्य्यस्तु पुत्ररहिताः साध्व्यो भरणीया अप्रतिकूलाश्चेत्। अन्यथा वहिष्कारणीयाः। तदाह योगीश्वरः।
सुताश्चैषां प्रभर्त्तव्या यावद्वै भर्तृसात्कृताः। अपुत्रा योषितश्चैषां भर्त्तव्याः साधुवृत्तयः। निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथै
व च। आपस्तम्बः। अवृषणितस्त्वरिक्थपिण्डोदकास्ति निवर्त्तन्ते। अवपावितोभिन्नोदकोक्तः। तथा बृहस्पतिः। सवर्णाजोप्य
गुणवान्नार्हः स्यात् पैतृके धने। तत्पिण्डदाः श्रोत्रिया ये तेषान्तदभिधीयते। उत्तमर्णाधमर्णेभ्यः पितरन्त्रायते सुतः। अतस्त
द्विपरीतेन नास्ति तेन प्रयोजनम्। तया गवा किं क्रियते या न धेनुर्न्न गर्भिणी। कोर्थः पुत्रेण जातेन यो न विद्वान्न धार्म्मिकः। शा
स्त्रशौर्य्यार्थरहितस्तपोज्ञानविवर्ज्जितः। आचारहीनः पुत्रस्तु मूत्रोच्चारसमः स्मृतः। अयमर्थः। पित्रादेरौर्ध्वदेहिककर्म्म
णः कर्त्ता सुतोऽसंस्कृतोपि वरः श्रेष्ठः। ज्येष्ठो वेदपारगोप्यपरेण वर इति। पुन्नाम्नो नरकाद्यस्मात् पितरन्त्रायते सुतः।
तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवेति स्मृतेः पुत्रकर्म्मकर्त्तुः पितृधनस्वाम्यमेव चेतनमतस्तदकुर्वतः कुतो वेतनाधिकार इ
ति भावः। मनुरपि। सर्व्व एव विकर्म्मस्था नार्हन्ति भ्रातरो धनमिति। श्रौतस्मार्त्तकर्मानधिकारिणो विकर्म्मस्थाश्च भागानर्हाः।

इतिभावः । इतिविभागानधिकारिणः ॥७॥ अथविभक्तकृत्यम् । तत्र नारदः । यद्येकजाता बहवः पृथग्धर्माः पृथक्क्रियाः । पृथक्कर्मगुणोपेता न चेत्कार्य्येषु संमताः । स्वभागान्यदि दद्युस्ते विक्रीणीयुरथापि वा ॥ कुर्युर्य्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य हीति । अस्यार्थः । एकस्माज्जाता बहवो भ्रातरो यदि विभक्ताः इतिशेषः इति केचित् वयन्तु पृथग्धर्मा इत्यादेरेव विभक्ता इत्यर्थः । तद्विधानस्यात्राप्रतीतेरानर्थक्याच्च । पृथग्विभिन्ना धर्मा दैवपितृद्विजार्चनरूपा येषां नत्वग्निहोत्रादिरूपः । तस्य द्रव्यसाध्यत्वेप्यविभागेपि पृथक्त्वात् । तथा च बृहस्पतिः । एकपाकेन वसतां पितृदेवद्विजार्चनम् । एकम्भवेद्विभक्तानां तदेव स्याद्गृहे गृहे । एतच्च प्राङ्निरूपितम् । पृथक्क्रिया लौकिककृष्यादिरूपा येषां पृथग्विभिन्ना ये कर्मणाङ्कण्डनपेषणादीनां गुणा उपसर्जनभूता मुसलोलूखलदृषदुपलादयस्ते येषाम् । ते चेत्कार्य्येषु न संमताः परस्परमनुमतिं यद्यपि न कुर्वन्ति । तथापि ते स्वभागान्यदि दद्युर्विक्रीणीयुर्वा । तत्सर्वमन्यदप्याधीकरणक्रयणादानादि यथेष्टं स्वेच्छया कुर्य्युः । विभक्ता यद्यनुमतिं कुर्वन्ति व्यवहारसौकर्य्यमात्रं भवति । अथ न कुर्वन्ति । तथापि न दानाद्यनिष्पत्तिः । तत्र हेतुः हि यस्मात्ते स्वधनस्यासाधारणस्वत्वापन्नस्य धनस्येशाः स्वामिनः । साधारणे स्वत्वे हि परस्परानुमत्यपेक्षा न त्वसाधारणेपीति भावः । यत्तु बृहस्पतिनोक्तम् । विभक्ता वाऽविभक्ता वा सपिण्डाः स्थावरे समाः । एको ह्यनीशः सर्वत्र दानाधमनविक्रये इति । तदप्यविभक्तानुमतिं व्यवहारसौकर्य्यार्थमेव प्रतिपादयति ग्रामाद्यनुमतिवदित्यवसेयं स्थावरे हि चिरकालस्थायिनि यतसाक्ष्यादिविगमे विभागाविभागनिर्णयो दुःशंकः स्यात्कालान्तरे । सर्व्वान्त्वनुमतौ विभागनिर्णयानपेक्ष एव व्यवहारः सिद्ध्यतीति सर्वानुमत्या दत्वादित्याशय इति विज्ञानेश्वरादयो बहवश्चाहुः । स्मृतिचन्द्रिकारस्तु यदि विभक्ता अपि स्थावरविभागं दुष्करं मन्यमानास्तत्फलमेव फलकाले विभज्य भोक्ष्याम इत्यभिसन्धिना तदितरधनमेव पृथक् विभज्य गृहीत्वा स्थावरं मध्यकमेव स्थापयन्ति तादृशस्थावरविषयमिदमित्याह । तत्कल्पनामात्रम् । अविभक्तत्वादेव तत्रानुमत्यपेक्षणात् । स एव येनांशो यादृशो लब्धः प्राप्य

तन्नविचालयेदिति। प्राप्यस्वीकृत्य। विभागकाले मत्वा पश्चाद्विप्रतिपद्यमानो राज्ञा वारणीयोऽन्यायवृद्धे दण्ड्यश्चेत्याह स एव। स्वेच्छागतविभागो यः पुनरेव विसंवदेत्। स राज्ञांशे स्वके स्थाप्यः शासनीयोऽनुबन्धकृत्। अनुबन्धो निर्बन्ध आग्रह इति यावत्। इति विभक्तकृत्यम् ॥●॥ अथ विभागप्रकारेऽउक्ते तत्सन्देहे निर्णयप्रकार उच्यते। तत्र याज्ञवल्क्यः॥ विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः। विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः। विभागस्य निह्नवेऽपलापे विभक्तमध्ये केनचित्कृते ज्ञातिभिः पितृबन्धुभिः। बन्धुभिर्मातुलादिभिः साक्षिभिश्चोदासीनैः साक्षित्वलक्षणलक्षितैः। यद्यपि ज्ञातिबन्धवोऽपि साक्षिविधयैव निर्णयकारणान्यथापि वहिरङ्गसाक्ष्यपेक्षया अन्तरङ्गास्ते श्राद्धादि पृथग्भावरूपविभागचिह्नं तत्त्वज्ञातिभागकर्त्तारश्चेति गोबलीवर्दन्यायेन पृथगुपात्ताः। लेख्येन विभागपत्रेण च विभागस्य भावना निर्णयो ज्ञातव्यः। तथा यौतकैः पृथक्कृतैः। युमिश्रणामिश्रणयोरिति धात्वनुसारात्। गृहैः क्षेत्रैश्च। नारदः। विभागधर्मसन्देहे दायादानां विनिर्णयः। ज्ञातिभिर्भागलेख्येन पृथक्कार्य्यप्रवर्त्तनात्। ज्ञातिग्रहणानेषु सत्स्वन्यसाक्षिपुरस्कार इत्येतदर्थम्। कार्य्यं कृष्यादि तस्य पृथक्प्रवर्त्तनात्। शङ्खः। गोत्रभागविभागार्थे सन्देहे समुपस्थिते। गोत्रजैश्चाप्यविज्ञाते कुलं साक्षित्वमर्हति॥ कुलं बन्धवो मातुलादयः। अत एव नारदेन मुख्यत्वाज्ज्ञातय एव निर्दिष्टाः। ज्ञातृभिरिति पाठस्तु रत्नाकरः पुरातनपुस्तकेषु निबन्धेषु चादर्शनात्। लिखितन्तु साक्षिभ्यो बलवदिति परिभाषायां निरूपितम्। नारदः। दानग्रहणपश्वन्नगृहक्षेत्रपरिग्रहाः। विभक्तानां पृथग्ज्ञेयाः पाकधर्म्मागमव्ययाः। साक्षित्वम्प्रातिभाव्यञ्च दानं ग्रहणमेव च। विभक्ता भ्रातरः कुर्युर्नाविभक्ताः कथञ्चन। येषामेताः क्रिया लोके प्रवर्त्तन्ते स्वरिक्थतः। विभक्तानवगच्छेयुर्लेख्यमप्यन्तरेण तान्। धर्म्मो वैश्वदेवादिः एकपाकेन वसतामिति प्रागुक्तवचनात्। भ्रातॄणामविभक्तानामेको धर्म्मः प्रवर्त्तते। विभागे सति धर्म्मोऽपि भवेत्तेषां पृथक्पृथगिति नारदेनैवोक्तत्वाच्च। बृहस्पतिः। साहसं स्थावरं न्यासः प्राग्विभागश्च रिक्थिनाम्। अनुमानेन विज्ञेयं न स्यातां यत्र साक्षिणौ। न स्यातामित्यत्र यदीत्यध्याहारः। पृथगायव्ययधनाः कुसीदञ्च परस्परम्।

वणिक्पथश्चये कुर्य्युर्विभक्तास्ते न संशयः। अयोऽथयोधनञ्च पृथग्येषामिति विग्रहः। कुसीदं वृद्ध्यर्थं धनप्रयोगः। वणिक्पथो वाणिज्यम्। परस्परमिति। एकोऽभ्रातोत्तमर्णः परश्चाधमर्णः। एको विक्रीणीते परश्च क्रीणाति। इत्येवमादिभिर्लिङ्गैर्विना विभागमनुपपद्यमानैर्विभागः प्रमातव्य इत्यर्थः। एताः क्रिया इति बहुवचनान्मिलितानामेवैषां लिङ्गत्वमिति न भ्रमितव्यम्। व्यस्तसमस्तानामपि तद्विधानात्। न्यायमूलकत्वाच्च वचनस्य अनुमानेनाप्यनिर्णये दिव्यैः शपथैर्वा विषयाल्पत्वभूयस्त्वानुसारेण निर्णयः। युक्तिष्वप्यसमर्थासु शपथैरेनमर्दयेदिति परिभाषायां निरूपितत्वाच्च तु मानुषं निर्णायकमस्ति युक्त्यश्चाभावाः। दिव्यशपथाध्यवसायश्चान्यतरस्य न भवति। तत्र पुनर्विभागः कार्य्य इत्याह मनुः। विभागे यत्र सन्देहो दायादानां परस्परम्। पुनर्विभागः कर्त्तव्यः पृथक्स्थानस्थितैरपीति। स च परिशेषोऽप्युभयव्ययमित्यादि संसृष्टिविभागादिरीत्यानुसन्धेयम्। यच्च मनुनैवोक्तम्॥ सकृदंशो निपतति सकृत्कन्या प्रदीयते। सकृदाह ददानीति त्रीण्येतानि सतां सकृदिति। तत्प्रवृत्तिकारणाभावे। कन्यादानदानान्तरयोरप्येवम्। इति विभागसन्देहे निर्णयः॥ समाप्तञ्चेदं दायभागाख्यं विवादपदम्॥ ● ॥

अथ द्यूतसमाह्वयाख्यं व्यवहारपदम्। तस्य स्वरूपमाह नारदः। अक्षवध्रशलाकाद्यैर्देवनं जिह्मकारितम्। पणक्रीडा वयोभिश्च पदं द्यूतसमाह्वयमिति। अक्षाः पाशाः। वध्रश्चर्म्मपट्टिका। शलाका दन्तादिमय्यो दीर्घचतुरस्राः। आद्यग्रहणाच्चतुरङ्गादिक्रीडासाधनं करितुरङ्गरथादिकं गृह्यते। तैरप्राणिभिर्य्या पणपूर्विका क्रिया। तथा वयोभिः पक्षिभिः पारावतादिभिश्चशब्दान्मल्लमेषादिभिश्च प्राणिभिर्या पणपूर्विका क्रीडा क्रियते तदुभयं यथाक्रमं द्यूतसमाह्वयाख्यं व्यवहारपदमित्यर्थः। द्यूतञ्च समाह्वयश्च द्यूतसमाह्वयम्। अत एव मनुः। अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते। प्राणिभिः क्रियमाणस्तु स विज्ञेयः समाह्वय इति। तत्र सभिकं प्रत्याह नारदः। सभिकः कारयेद्द्यूतं देयं दद्याच्च तत्कृतम्। दशकन्तु शतं वृद्धिस्ततः स्याद्द्यूतकारिता॥ अथवा कितवो राज्ञे दत्त्वा भागं यथोदितम्। प्रकाशं देवनं कुर्य्यादेवं दोषो न विद्यत इति। तस्य वृत्तिमाह याज्ञवल्क्यः। ग्ल

हेशतिकवृद्धेस्तु सभिकः पञ्चकं शतम्। गृह्णीयाद्धूर्तकितवादितरद्दशकं शतमिति। परस्परं सम्प्रतिपत्त्या कितवैः परिकल्पितः पणो ग्लहः तत्र ग्लहे शताद्या शतिका शतपरिमिता तदधिकपरिमिता वा वृद्धिर्यस्यासौ शतिकवृद्धिः तस्मात्कितवात्पञ्चशतं जितस्य ग्लहस्यात्मवृत्त्यर्थं विंशतितमं भागं गृह्णीयादित्यर्थः। पञ्चकं शतं पञ्च पणा आयो यस्मिन् शते तत्पञ्चकं तदस्मिन्वृद्ध्येति कन्॥ सभा कितवनिवासार्था यस्यास्त्यसौ सभिकः सभापतिः स तु कल्पिताक्षादिनिखिलक्रीडोपकरणः तदुपचितद्रव्योपजीवी। इतरस्मात् पूर्णशतवृद्धेः कितवाद्दशकं शतं जितस्य दशमभागं गृह्णीयादित्यर्थः। एवं कॢप्तवृत्तेः सभिकस्य यत्कर्तव्यं तदाह स एव। स सम्यक्पालितो दद्याद्राज्ञे भागं यथाकृतम्। जितमुद्ग्राहयेज्जेत्रे दद्यात्सत्यं वचः क्षमीति। यः कॢप्तवृत्तिर्द्यूताधिकारी सभिकः स राज्ञा धूर्तकितवेभ्यो रक्षितस्तस्मै राज्ञे यथाप्रतिपन्नमंशं दद्यात्। तथा जितं द्रव्यं पराजितसकाशादासेधादिनोद्ग्राह्य जेत्रे जयिने दद्यात्। तथा क्षमी भूत्वा द्यूतकारिणां विश्वासार्थं सत्यं वचो वदेदित्यर्थः। नारदोऽपि। सभिकः कारयेद्द्यूतं देयं दद्याच्च तत्कृतमिति। बृहस्पतिरपि। सभिको ग्राहकस्तत्र दद्याज्जेत्रे न्तपायवेति द्यूतपराजितकितवानां बन्धनादिना पणग्राहको भवेत्। पणञ्च दद्यात्प्रागेव स्वकीयं द्रव्यं चन्तपाय च यथाभागं सभिको दद्यादित्यर्थः। तथा च कात्यायनः। जेतुर्दद्यात्स्वकं द्रव्यं जितं ग्राह्यं त्रिपक्षिकम्। सद्यो वा कितवेनैव सभिकान्न संशय इति। त्रिपक्षिकमित्यनेन यथासामर्थ्यमा त्रिपक्षात्कालो देय इति दर्शितमिति स्मृतिचन्द्रिकायाम्। यदा तु जेता जितं द्रव्यं सभिको दापयितुमशक्तस्तदा राजा दापयेदित्याह याज्ञवल्क्यः। प्राप्ते नृपतिना भागे प्रसिद्धे धूर्तमण्डले। जितं ससभिके स्थाने दापयेदन्यथा न त्विति। प्रसिद्धे त्वन्यथा प्रच्छन्ने सभिकरहितेऽदत्तराजभागे द्यूते जितपणो जेत्रे न दापयेदित्यर्थः। प्राणिद्यूते प्राणिनाञ्जयपराजये तत्स्वामिनोरित्याह बृहस्पतिः। द्वन्द्वयुद्धेन यः कश्चिदवसादमवाप्नुयात्। तत्स्वामिना पणो देयो यस्तत्र परिकल्पित इति। पणापरिकल्पनं कृताकृतमित्याह नारदः। परिहासकृतं यच्च यच्चाप्रविदितं नृपे। तत्रापि तानुयात्काममथवानुमतं तयोरिति। काम्यत इति कामः पणः। जयपराजयविप्रतिपत्तौ निर्णयप्र

कारमाह याज्ञवल्क्यः । द्रष्टारो व्यवहाराणां साक्षिणश्च त एव हीति । द्यूतव्यवहाराणां द्रष्टारः सभ्यास्त एव कितवा एव नियोक्तव्या रा
ज्ञा । न तत्र श्रुताध्ययनसम्पन्नादिव्याद्युक्तनियमोऽस्ति । साक्षिणोऽपि त एव द्यूते द्यूतकरा एव कार्याः न तत्र स्त्रीबालवृद्धकितवेत्यादि
साक्षिनिरूपणोक्तनिषेधोऽस्तीत्यर्थः । विष्णुरपि । कितवेष्वेव तिष्ठेरन् कितवाः संशयं प्रति । य एव तत्र द्रष्टारस्त एवैषान्तु सा
क्षिण इति । साक्षिणाम्परस्परविरोधे त्वाह बृहस्पतिः । उभयोरपि सन्दिग्धौ कितवाः स्युः परीक्षकाः । यदा विद्वेषिणस्ते तु
तदा राजा विचारयेदिति । अनियुक्तद्यूतकारिणो दण्डमाह नारदः । अनिर्दिष्टस्तु यो राज्ञो द्यूतं कुर्वीत मानवः । न स तत्प्राप्नुया
त्कामं विनयञ्चैव सोऽर्हतीति । ये तु कूटं द्यूतं कुर्वन्ति तेषां दण्डमाह याज्ञवल्क्यः । राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपधिदेविन इति
। कूटैरक्षादिभिः उपधिना मणिमन्त्रादिना मतिवञ्चनेन ये दीव्यन्ति तान् श्वपदादिनाङ्कयित्वा राजा स्वराष्ट्रान्निर्वासयेदि
त्यर्थः । निर्वासने विशेषमाह नारदः । कूटाक्षदेविनः पापान् राजा राष्ट्राद्विवासयेत् । कण्ठेऽक्षमालामासज्य स ह्येषां विनयः स्मृत इ
ति दण्डने विशेषमाह विष्णुः । द्यूते कूटाक्षदेविनाङ्करच्छेदः । उपधिदेविनां हस्तच्छेद इति । यानि तु द्यूतनिषेधकानि मनुवच
नानि । द्यूतं समाह्वयञ्चैव यः कुर्य्यात्कारयेत वा । तान् सर्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः । प्रकाशमेतत्तास्कर्य्यं यद्देवन
समाह्वयौ । तयोर्नित्यम्प्रतीघाते नृपतिर्यत्नवान्भवेत् । द्यूतं समाह्वयञ्चैव राजा राष्ट्रे निवारयेदित्यादीनि तानि कूटाक्षदेवनवि
षयतया राज्ञाध्यक्षसभिकरहिततया वा योज्यानि । अत एव बृहस्पतिः । द्यूतं निषिद्धं मनुना सत्यशौचधनापहम् । अभ्यनु
ज्ञातमन्यैस्तु राजभागसमन्वितम् । सभिकाधिष्ठितं कार्य्यं तस्करज्ञानहेतुनेति । याज्ञवल्क्योऽपि । द्यूतमेकमुखं कार्यं तस्क
रज्ञानकारणादिति । राज्ञा द्यूतमेकंमुखम्प्रधानं यस्य तत्तथोक्तं कार्य्यम् । राजाध्यक्षाधिष्ठितं राज्ञा कारयितव्यमित्यर्थः । त
स्करज्ञानकारणात् । ल्यपलोपे पञ्चमी । तस्करज्ञानरूपम्प्रयोजनम्पर्यालोच्येत्यर्थः । प्रायशश्चौर्य्यार्जितधना एव कितवा भ
वन्ति तस्माच्चौरविज्ञानार्थमेकमुखं कार्य्यमित्याशयः । द्यूते विहितन्धर्म्मजातं समाह्वयेऽतिदिशत्येव । एष एव विधिर्ज्ञेयः प्रा

णिद्यूते समाह्वये इति । सभिकवृत्तिकल्पनादिलक्षणो धर्मः समाह्वयेपीत्यर्थः । इति द्यूतसमाह्वयाख्यं व्यवहारपदम् ॥ इ
ति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमलश्रीमन्महाराजाधिराजप्रतापरुद्रतनूजश्रीमन्म
हाराजमधुकरसाहसूनुश्रीमन्महाराजाधिराजचतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकासदिनकरश्रीवीरसिंहदेवो
द्योजितश्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूनुसकलविद्यापारावारपारीणधुरीणजगद्दारिद्र्यमहागजपारीन्द्रवि
द्वज्जनजीवातुश्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधनिबन्धे व्यवहारप्रकाशे समाप्तमष्टादशविवादपदनिरूपणाख्यन्तृती
यम्प्रकरणम् ॥ ● ॥ अथ प्रकीर्णकाख्यञ्चतुर्थम्प्रकरणमारभ्यते ॥ तत्र बृहस्पतिः । एष वादिकृतः प्रोक्तो व्यवहारः समास
तः ॥ नृपाश्रयम्प्रवक्ष्यामि व्यवहारं प्रकीर्णकमिति । तल्लक्षणभेदावाह नारदः । प्रकीर्णके पुनर्ज्ञेया व्यवहारा नृपाश्रयाः
॥ राज्ञामाज्ञाप्रतीघातस्तत्कर्म्मकरणन्तथा । पुरःप्रमाणं सम्भेदः प्रकृतीनान्तथैव च । पाषण्डनैगमश्रेणिगणधर्मविपर्य
याः । पितापुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः । प्रतिग्रहविलोपश्च कोप आश्रमिणामपि । वर्णसंकरदोषश्च तद्वृत्तिनियम
स्तथा । न दृष्टं यच्च पूर्वेषु सर्वं तत्स्यात्प्रकीर्णकमिति । प्रतीघातो भङ्गः । तत्कर्म्म । सिंहासनारोहणादि राजकर्म । पाष
ण्डादयः पूर्वमेव व्याख्याताः । प्रकीर्णके विवादपदेष्वेवं विवादा राजाज्ञोल्लङ्घनतदाज्ञाकरणतत्कर्मरक्षणादिविषयास्ते नृपस
मवायिन एव । तत्र स्मृत्याचारव्यपेतेन मार्गेण वर्तमानानाम्प्रतिकूलतामासाद्य नृप एव व्यवहारनिर्णयं कुर्य्यात् । एवं वदता
न्नृपाश्रये यो व्यवहारस्तत्प्रकीर्णकमित्युक्तम्भवति । विषयविशेषे दण्डविशेषमाह याज्ञवल्क्यः । न्यूनं वाभ्यधिकं वापि लिखेद्यो
राजशासनम् । पारदारिकचौरं वा मुञ्चतो दण्ड उत्तमः । यो राजदत्तभूमिनिबन्धयोर्मध्येऽन्यतरस्य परिमाणान्न्यूनत्वाधि
क्यान्यतराप्रकाशयन् राजशासनत्वेन लिखति । यश्च पारदारिकचौरं वा गृहीत्वा राज्ञेऽनिवेद्य मुञ्चति तावुभावप्युत्तमसाहसं
दण्डनीयावित्यर्थः । व्यासोपि । न्यायस्थाने गृहीत्वार्थमधर्मेण विनिर्णयम् । कुर्वन्नियुक्तो [illegible] । द

क्रोधजीविनोद्रव्यहीनान्कुर्य्याद्विवासयेदिति । राज्ञः कोशापहरणे दण्डमाह मनुः । राज्ञः कोशापहर्तॄंश्च प्रतिकूलेषु च स्थितान् । घातयेद्विविधैर्दण्डैररीणां चोपजापकान् । सर्वस्वहरणमिति । सर्वस्वहरणं साधारणायद्व्यस्यजीवनोपकरणान्तद्व्यतिरिक्तविषयम् । अतएव नारदः । आयुधान्यायुधीयानां वाह्यानि कृषिजीविनाम् । यच्च यस्योपकरणं येन जीवन्ति जीविकाम् । सर्वस्वहरणेप्येतन्न राजा हर्त्तुमर्हतीति । वधस्थाने मौण्ड्यं ब्राह्मणस्य कर्त्तव्यमित्याह मनुः । ब्राह्मणस्य वधो मौण्ड्यं पुरान्निर्वासनं तथा । ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन चेति । तत्कर्मकरणे दण्डमाह याज्ञवल्क्यः । राजयानासनारोहे दण्डो मध्यमसाहसमिति । कात्यायनोपि । राजक्रीडासु ये सक्ता राजवृत्त्युपजीविनः । अप्रियश्रावणे वक्ता वधन्तेषां प्रकल्पयेदिति । शूद्राणां प्रव्रज्यादिकरणे दण्डमाह स एव । प्रव्रज्यावसितं शूद्रं जपहोमपरं तथा । वधेन शासयेत्पापं राज्ञो वाहिगुणं दममिति । धर्मशास्त्रानुसारेण व्यवहारदर्शिनो राज्ञः फलमाह यमः । एवं धर्मे प्रवृत्तस्य सद्भावदण्डधरस्य च । यशोस्मिन् प्रथते लोके स्वर्गे वासस्तथाक्षय इति ॥ ● ॥ इति प्रकीर्णकाख्यञ्चतुर्थं प्रकरणं समाप्तम् ॥ ● ॥ प्रत्याशम्पारवर्द्धितेऽर्थिजनतानन्द्यान्धकारापहे श्रीमद्वीरमृगेन्द्रदानजलधिर्यद्वक्त्रचन्द्रोदये । राज्ञादेशितमित्रमिश्रविदुषस्तस्योक्तिभिर्निर्मिते यन्थेस्मिन्व्यवहारजातविषयः पूर्णः प्रकाशोभवत् ॥ ● ॥ इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमलश्रीमन्महाराजाधिराजप्रतापरुद्रतनूजश्रीमन्महाराजमधुकरसाहसूनुश्रीमन्महाराजाधिराजचतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकासदिनकरश्रीवीरसिंहदेवोद्योजितश्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूनुसकलविद्यापारावारपारीणधुरीणजगद्दारिद्र्यमहागजपारीन्द्रविद्वज्जनजीवातुश्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधनिबन्धे व्यवहारप्रकाशः पूर्त्तिमगमत् ॥ ● ॥ इति श्रीव्यवहारकाण्डं समाप्तम् ॥ ● ॥ शुभमस्तु ॥ * ~~~ * ॥

शाकेमुन्यग्निसप्तेन्दुसम्मितेवत्सरेशुभे । पक्षाङ्गवसुभूमानेविक्रमादित्यवत्सरे ॥ शाके १७३७ ॥ सम्बत १८७२ ॥

भूयुग्मदृष्टिधरणीसम्मितेयवनाब्दके । चैत्रिकस्यासितेपक्षेपञ्चम्यांगुरुवासरे ॥ सन १२२१ साल ॥

साल धरावसुचन्द्रले योमनेमतारीख । मारिचमाहबखानियेईसवीगुरुसोशीख ॥

सन १८१५ ईसवी ॥ तारिख ३० मार्च ॥

श्रीमत्सम्राटमहाधिराजजह्नुपतेराज्ञांसमादायतम् । सद्व्याख्यासहितम्मिवेकनिपुणंश्रीवीरमित्रोदयम् ॥

श्रीचूडामणिमैथिलाकृतिवरान्संशोध्यसूचीयुतंवावूरामसुधीर्हितायविदुषाम्मुद्राक्षरैर्लेखयत् ॥ ३ ॥

॥ संस्कृतयन्त्रे खिदिरपुरे श्रीमदनपाले नाङ्कितम् ॥

॥ अथमित्रमिश्रकृतवीरमित्रोदयस्यसूचीपत्रम् ॥

J 5

॥ इतिवीरमित्रोदयस्यसूचीपत्रम् ॥

*—*—*

॥ अथवीरमित्रोदयस्याशुद्धिपत्रम् ॥

॥अ॰प॰॥

| पत्र | पृष्ठ | पङ्क्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| २ | १ | ५ | इथं | इदं |
| २ | २ | ८ | लेखप् | लेखाप् |
| ३ | १ | १३ | केस्यर्थः | केष्यर्थः |
| ३ | २ | ७ | न्याप्य | न्याय्य |
| ४ | १ | १ | विहबे | विशे |
| ४ | २ | ५ | वृत्त | वृत्त |
| ५ | १ | १० | गक्ष | गच्छ |
| ५ | २ | ६ | मम्ि | अग्नि |
| ६ | १ | ५ | योक्या | योया |
| ६ | २ | १२ | सान्य | सामान्य |
| ८ | २ | १२ | वर्शी | वर्णी |
| ९ | १ | १३ | स्यदा | न्यदा |
| १० | २ | १३ | नपे | नृपे |
| ११ | १ | १० | अप्वे | अवे |
| ११ | १ | १४ | गृकु | गृह्णकु |
| १३ | १ | १ | तद्रष्ट | तद्रष्ट |
| १४ | १ | २ | धिक्छद | धिकृद |
| १४ | २ | ७ | रज्ञा | रज्ज्वा |

| | | | | |
|---|---|---|---|---|
| १५ | २ | १० | मति | मनि |
| १६ | १ | ४ | युत्वा | युक्त्वा |
| १६ | १ | ११ | राधान्य | राधप |
| १६ | २ | १६ | डसोर्मु | कन्मुखो |
| २१ | १ | ३ | चतुभि | चतुर्भि |
| २२ | १ | १३ | शाव | श्राव |
| २४ | २ | १ | कारणोन्त | कारणोन |
| २५ | १ | ८ | योः | योऽर्थः |
| २५ | १ | १६ | कमसन्त | कमरोन |
| २६ | १ | ८ | ह्याधार | ह्याधार |
| २९ | १ | १३ | नूप्रति | नुप्रति |
| ३१ | १ | १६ | सम्यादी | सभ्यादी |
| ३१ | २ | ६ | र्दिशेत् | निर्दिशेत् |
| ३२ | १ | ७ | आरोया | आरोप्या |
| ३३ | १ | ८ | यादि | याहादि |
| ३८ | २ | १० | कायनै | कात्यायनै |
| ३९ | १ | ४ | स्वपगा | स्वपगा |
| ३९ | २ | ३ | नियतह्या | नियताह्या |
| ४२ | २ | ९ | संभवना | संभावना |
| ४३ | २ | ११ | सद्यःतते | सद्योनीते |
| ४४ | १ | ३ | वष्टस्ते | वष्टम्भस्ते |
| ४४ | १ | १० | साहसेषु | साहसेषु |
| ४४ | २ | १६ | दर्षनं | दर्शनं |
| ४५ | १ | ९ | दृच्छया | यदृच्छया |
| ४५ | १ | १३ | प्रवगा | अवगा |
| ४० | २ | २ | याचि | याचितम् |
| ४९ | १ | १० | श्रुतृ | श्रुतृ |
| ५० | १ | ५ | व्याख्यानस्य | व्याख्यानस्य |
| ५१ | १ | २ | न्यपिके | न्यधिके |
| ५२ | १ | १० | वासस्व | वासस्व |
| ५२ | २ | ७ | यद्वयो | यद्वयो |
| ५४ | २ | ३ | रिंशके | रिंशत्के |
| ५५ | १ | २ | प्रत्यार्थे | प्रत्ययार्थे |
| ५६ | २ | ६ | ननुद्वै | ननुतद्वै |

| | | | | |
|---|---|---|---|---|
| ५७ | २ | १० | निगदस | निगदनव |
| ५८ | २ | १ | नधर्म्मौ | योऽधर्म्मौ |
| ५९ | १ | ७ | त्वेड्या | त्वेदंड्या |
| ६१ | १ | १२ | कश्चैव | कश्चैव |
| ६१ | २ | १३ | दृष्ट्ट | द्रष्ट्ट |
| ६१ | २ | १४ | दृष्टारः | द्रष्टारः |
| ६९ | १ | ७ | विरूणां | विरुद्धं |
| ७० | १ | ११ | भिधया | विधया |
| ७० | २ | १ | बाक्या | बाक्पा |
| ७० | २ | ४ | बोप्त | बोप्तं |
| ९७ | १ | ५ | न्यगन्त | न्ववगन्त |
| ११२ | २ | ९ | पिशः | पिसः |
| १२२ | २ | ५ | याज्ञाल्क्यः | याज्ञवल्क्यः |
| १२९ | १ | ८ | नश्येनु | नश्येमु |
| १३४ | २ | ११ | विक्रिया | विक्रीया |
| १४८ | १ | ११ | रज्वा | रज्ज्वा |
| १५९ | १ | ९ | भार्याया | भार्या |
| १६२ | २ | १ | स्वाम्य | स्वार्थे |
| १६२ | २ | १६ | भत्राद | भत्राद्य |
| १६५ | १ | ५ | वियोगज्य | विनियोज्य |
| १६६ | २ | १६ | द्वानेहि | दानेहि |
| १७० | १ | ११ | पादि | पाति |
| १७१ | १ | १४ | केषाञ्चि | कैषाञ्चि |
| १७२ | २ | ३ | सम्नि | समम्नि |
| १७५ | १ | १६ | स्वस्ये | स्वावस्थे |
| १७७ | २ | १४ | दिष्टं | दिव |
| १८८ | २ | १६ | पारंत्र्य | पारतन्त्र्य |
| २१३ | २ | १४ | धात्रा | भ्रात्रा |
| २२० | २ | ११ | ज्ञातु | ज्ञातु |
| २२१ | १ | १० | अएव | अतएव |

॥ इतिवीरमित्रोदयस्याशुद्धिपत्रं समाप्तम् ॥

*~*~*~*